चं गोविन्दभट्टः

मो वासुदेवः

बु ठाकोरना

जी लालभट्टः

पु भास्करना

प्रा जनार्दनः

पं० श्री०

पू

# NAGANANDA

## A DRAMA

BY

**Sriharsha Deva of Cashmere.**

EDITED WITH A COMMENTARY

BY

PANDITKULAPATI JIBANANDA VIDYASAGARA, B. A.

*Superintendent Free Sanskrit College,*

THIRD EDITION.

**CALCUTTA.**

PRINTED AT THE SIDDHESWARA PRESS.



1904

*Price ½ Rupee.*

To be had From Panditkulapati Jibananda Vidyasagara, B. A.
Superintendent Free Sanskrit College, Calcutta.

# नागानन्दम्

## नाम नाटकम् ।

महाकवि श्रीहर्षदेवविरचितम् ।

पण्डितकुलपतिना
वि, ए, उपाधिधारिणा
**श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण**
विरचितया व्याख्यया समुद्भासितम् ।

तृतीय संस्करणम् ।

**कलिकातानगर्य्याम्**
सिद्धेश्वरयन्त्रे मुद्रितम् ।

—००—

मूल्यम् अर्द्ध मुद्रा ।

इं १९०४ ।

প্রকাশক—শ্রীজীবানন্দ বিদ্যাসাগর বি, এ,।
২ নং রমানাথ মজুমদারের ষ্ট্রীট।

প্রিণ্টর—শ্রীসিদ্ধেশ্বর পান।
৩৮নং শিবনারায়ণ দাসের লেন কলিকাতা।



पण्डितकुलपतिः
**श्रीजीवानन्दविद्यासागर वि ए**

*PANDIT JIBANANDA VIDYASAGARA B, A.*
*Superintendent Free Sanskrit College, Calcutta.*

इमिणा मुहचन्देण विरहिअं दाणीं अन्धआरीभविस्सदि पाआलं (२)।

शङ्ख। अम्ब! किमिति वैक्लव्येन (न) सुतरां नः पीड़यसि?

वृद्धा। [निर्वर्ण्य पुत्रस्याङ्गानि स्पृशन्ती] हा पुत्त! कहं दे अदिट्ठसूरकिरणं सुउमारसरीरं णिग्घिणिओ (प) गलुड़ो आहालइस्सदि? (३)। [कण्ठे गृहीत्वा रोदिति]।

शङ्ख। अम्ब! अलं परिदेवितेन, पश्य।

क्रोड़ीकरोति प्रथमं यदा जातमनित्यता।
धात्रीव जननी पश्चात्तदा शोकस्य कः क्रमः? ॥५७॥ (फ)

[गन्तुमिच्छति]।

---

(२) हा पुत्रक शङ्खचूड़! कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्यः? अनेन मुखचन्द्रेण विरहितमिदानीमन्धकारीभविष्यति पातालम्।

(३) हा पुत्र! कथं ते अदृष्टसूर्य्यकिरणं सुकुमारशरीरं निर्घृणो गरुड़ आहारयिष्यति?।

---

(न) वैक्लव्येन कातरभावेन।

(प) निर्घृणः निर्दयः।

(फ) क्रोड़ीकरोतीति। अनित्यता विनश्वरत्वं धात्रीव उपमातेव यदा जातं जीवं प्रथमं क्रोड़ीकरोति, क्रोड़ं नयतीत्यर्थः पश्चात् जननी क्रोड़ीकरोतीत्यर्थः तदा शोकस्य क्रमः नियमः विधिरिति यावत् कः? न कोऽपि शोकहेतुरित्यर्थः।

वृद्धा। पुत्तश्र! चिट्ठ मुहुत्तश्रं, जाव दे वश्रणं पेक्खामि (४)।

किङ्करः। एहि कुमाल सङ्कचूड़! किं ते एदाए भणन्तीए, पुत्तसिणेहमोहिदा क्खु एसा, ण जाणेदि लाअकज्जं? (५)।

शङ्ख। अयमागच्छामि।

किङ्करः। [आत्मगतम् अग्रतोऽवलोक्य] आणीदो क्खु एसो मए वज्झसिलासमीवे, ता वज्झचिह्णं दाइस्सं (६)।

नायकः। इयमसौ योषित्। [शङ्खचूड़ं दृष्ट्वा] नूनमनेनास्याः सुतेन भवितव्यम्, तत् किमाक्रन्दति?। [समन्तादवलोक्य] न खल्वस्या भयकारणं किञ्चित् पश्यामि, कुतोऽस्या भयमिति, यावदुपसर्पामि, प्रसक्त एवायमेतेषामालापः, कदाचिदत एवास्याभिव्यक्ति(ब)र्भविष्यति, तद्विटपान्तरितस्तावच्छृणोमि।

किङ्करः। [सास्रं कृताञ्जलिः] कुमाल संखचूड़ एसो सामिणो आदेसोत्ति कारिअ ईदिसं णिट्ठुरं मन्तीअदि (७)। (भ)

(४) पुत्र! तिष्ठ मुहूर्त्तम, यावत् ते वदनं प्रेचे।

(५) एहि कुमार शङ्खचूड़! किं ते एतया भणन्त्या, पुत्रस्नेहमोहिता खल्वेषा, न जानाति राजकार्य्यम्?

(६) आनीतः खल्वेष मया बध्यशिलासमीपे, तत् बध्यचिह्नं दास्यामि।

(७) कुमार शङ्खचूड़! एष स्वामिन आदेश इति कृत्वा ईदृशं निष्ठुरं मन्त्र्यते।

(ब) प्रसक्त एव चलित एव। अभिव्यक्तिः प्रकाशः।

(भ) मन्त्र्यते कथ्यते।



शङ्ख। भद्र! कथय।

किङ्करः। नागलाआ वासुई आणवेदि (८)।

शङ्ख। [शिरस्यञ्जलिं बद्ध्वा सादरम्] किमाज्ञापयति देवः?।

किङ्करः। एदं लत्तंसुअ जुअलं परिहिअ आलुह वज्झसिलं, जेण लत्तंसुअं उवलक्खिअ गलुड़ो आहालइस्सदित्ति (९)।

नायकः। [श्रुत्वा] कथमसौ वासुकिना परित्यक्तः?।

किङ्करः। कुमाल! गेण्ह एदं वसणजुअलं। (१०) [इत्यर्पयति।]

शङ्ख। [सादरम्] उपनय। [गृहीत्वा।] शिरसि स्वाम्यादेशः।

वृद्धा। [पुत्रस्य हस्ते वाससी दृष्ट्वा, सोरस्ताड़म्] हा वच्छ! एदं क्खु वज्जपाड़सण्णिभं सम्भावीअदि (११)। [मोहं गता]।

(८) नागराजो वासुकिः आज्ञापयति।

(९) इदं रक्तांशुकयुगलं परिधाय आरोह बध्यशिलाम्। येन रक्तांशुकमुपलक्ष्य गरुड़ आहारयिष्यतीति।

(१०) कुमार! गृहाणैतत् वसनयुगलम्।

(११) हा वत्स! इदं खलु वज्रपातसन्निभं सम्भाव्यते।

किङ्करः। आसन्ना गलुअस्स आअमणवेला, ता लहुं गच्छामि (१२)। [इति निष्क्रान्तः]।

शङ्ख। अम्ब! समाअससिहि।

वृद्धा। [समाश्वस्य सास्रम्] हा पुत्तक! हा मणोरहसअलद्ध! कहिं पुणो तुमं पेक्खिस्सं (१३)। [कण्ठे गृह्णाति]।

नायकः। अहो! नैर्घृण्यं (म)। गरुड़स्य अपि च—

मूढ़ाया मुहुरश्रुसन्ततिमुचः कृत्वा प्रलापान् बहून्
कस्त्राता तव पुत्रकेति कृपणं दिक्षु क्षिपन्त्या दृशम्।
अङ्के मातुरवस्थितं शिशुमिमं त्यक्त्वा घृणामश्नतः
चञ्चग्रेण खगाधिपस्य हृदयं वज्रेण मन्ये कृतम् ॥५८॥(य)

शङ्ख। [आत्मनोऽश्रूणि निवारयन्] अम्ब! किमतिवैक्लव्येन? ननु समाश्वसिहि।

---

(१२) आसन्ना गरुड़स्यागमनवेला, तल्लघु गच्छामि।
(१३) हा पुत्रक! हा मनोरथशतलब्ध! क पुनस्त्वां प्रेक्षिष्ये?

---

(म) नैर्घृण्यं निर्दयत्वम्।

(य) मूढ़ाया इति। मूढ़ाया मोहं गतायाः पुत्रस्नेहेनेति भावः मुहुः पुनः पुनः बहून् प्रलापान् कृत्वा अश्रुसन्ततिमुचः वाष्पवारि त्यजन्त्या इत्यर्थः, हे पुत्रक! कः ते तव त्राता रक्षिता इति कृपणं दीनं यथा तथा दिक्षु दृशं नयनं क्षिपन्त्या ददत्या मातुः, अङ्के क्रोड़े अवस्थितम् इमं शिशुं घृणां दयां त्यक्त्वा चञ्चग्रेण अश्नतः भक्षयतः खगाधिपस्य गरुड़स्य हृदयं वज्रेण कृतं निर्मितं मन्ये तर्कयामि। शार्दूलविक्रीड़ितं वृत्तम्।



वृद्धा। [सास्रम्] कहं समस्ससिस्सं, किं एकपुत्तकोत्ति कदुअ साणुकम्पेण णाअराएण पेसिदोसि, हा कहं अविच्छिण्णे जीअलोए मम पुत्तओ समरिदो (र) सव्वधा अहं म्हि मन्दभग्गा (१४)। [मूर्च्छति]।

नायकः। [सकरुणम्]।

आर्त्तं कण्ठगतप्राणं परित्यक्तं स्वबन्धुभिः।
त्राये नैनं यदि ततः कः शरीरेण मे गुणः? ॥ ५९ ॥ (ल)

तद् यावदुपसर्पामि।

शङ्ख। अम्ब! संस्तम्भयात्मानम् (व)।

वृद्धा। हा पुत्तअ! जदा णाअलोअपरिरक्खएण वासुइणा परिच्चत्तोसि, तदा को दे अवरो परित्ताणं करिस्सदि? (१५)।

---

(१४) कथं समाश्वसिष्यामि? किमेकपुत्रक इति कृत्वा सानुकम्पेन नागराजेन प्रेषितोऽसि? हा कथमविच्छिन्ने जीवलोके मम पुत्रकः मृतः। सर्वथाहमस्मि मन्दभाग्या।

(१५) हा पुत्रक! यदा नागलोकपरिरक्षकेण वासुकिना परित्यक्तोऽसि, तदा कस्ते अपरः परित्राणं करिष्यति?

---

(र) एकपुत्रक इति। एक एव पुत्रस्त्वं ममेति कृत्वा विविच्य सानुकम्पेन दयावता नागराजेन कथं प्रेषितोऽसि, तव प्रेषणं तादृशस्य दयावतो न युक्तमिति भावः। अविच्छिन्ने विच्छेदरहिते जीवलोके संसारे। मृतः नागराजेनेति शेषः साक्षेपोक्तिरियम्।

(ल) आर्त्तमिति। यदि आर्त्तं कातरं कण्ठगतप्राणं स्वबन्धुभिः परित्यक्तम् एनं न त्राये न रक्षामि, ततस्तदा मे शरीरेण को गुणः? किं प्रयोजनम्? न कोऽपीत्यर्थः।

(व) संस्तम्भय स्थिरीकुरु।

नायकः। [ उपसृत्य। नन्वहमहम्।

वृद्धा। [ नायकं दृष्ट्वा ससम्भ्रममुत्तरीयेण पुत्रकमाच्छाद्य नायकम् उपसृत्य जानुभ्यां स्थित्वा ] विणदाणन्दण! वावादेहि मं अहं दे णाअराएण आहारणिमित्तं परिकप्पिदा (१६)।

नायकः। [ सास्रम् ] अहो! पुत्रवात्सल्यम्!!!

अस्या विलोक्य मन्ये पुत्रस्नेहेन विक्लवत्वमिदम्।
अकरुणहृदयः करुणां करिष्यति भुजङ्गशत्रुरपि ॥९०॥ (श)

शङ्ख। अम्ब! अलं त्रासेन, न नागशत्रुः, पश्य—

महाहिमस्तिष्कविभेदमुक्त
रक्तच्छटाचर्चितचण्डचञ्चुः।
क्वासौ गरुत्मान् क्व च नाम सौम्य-
स्वभावरूपाकृतिरेष साधुः ॥ ९१ ॥ (ष)

वृद्धा। अहं क्खु, तुम्ह मरणभीआ सव्वं एव्व लोअं गरुअमअं पेक्खामि (१७)।

---

(१६) विनतानन्दन! व्यापादय माम्, अहं ते नागराजेनाहारनिमित्तं परिकल्पिता।

(१७) अहं खलु तव मारणभीता सर्वमेव लोकं गरुड़भयं प्रेक्षे।

---

(श) अस्या इति। अस्याः नागमातुः पुत्रस्नेहेन इदं विक्लवत्वं कातरत्वं विलोक्य अकरुणहृदयः निर्दयात्मा भुजङ्गानां शत्रुः गरुड़ोऽपि करुणां करिष्यति, मन्ये सम्भावयामि। आर्य्यावृत्तम्।

(ष) महेति। महताम् अहीनां नागानां मस्तिष्कस्य शिरस्थितघृताकारवस्तुनः विभेदात् मुक्ताभिर्निर्गलिताभिः रक्तच्छटाभिः रुधिरधाराभिः चर्चिते रञ्जिते रक्तीकृते इत्यर्थः चण्डे भीषणे चञ्चुषी यस्य तादृशः असौ गरुत्मान् क्व? सौम्याः स्वभावा रूपाणि आकृतयश्च यस्य तादृशः एषः साधुश्च क्व? नास्येति सम्भावनायाम् अस्य गरुड़त्वशङ्कापि न सम्भाव्यते इत्यर्थः।



नायकः। अम्ब! किं पुनःपुनरभिहितेन? ननु कर्मणैव सम्पादयामि (स)।

वृद्धा। [ शिरस्यञ्जलिं बद्ध्वा ] पुत्तअ! चिरं जीअ (१८)।

नायकः। ममैतदम्बार्पय बध्यचिह्नं
प्रावृत्य यावद्विनतात्मजाय।
पुत्रस्य ते जीवितरक्षणाय
स्वदेहमाहारयितुं ददामि ॥ ९२ ॥ (ह)

वृद्धा। [ कर्णौ पिधाय ] पड़िहदं क्खु एदं, तुमम्पि सङ्खचूड़णिव्विसेसो पुत्तो, अहवा सङ्खचूड़ादोवि अहिअअरो जो एव्वं बन्धुजणपरिच्चत्तं वि पुत्तकं मे सरीरप्पदाणेण रक्खिदुमिच्छसि (१९)।

शंख। अहो!! जगद्विपरीतमस्य महासत्त्वस्य (च) चेतः, कुतः।

---

(१८) पुत्रक! चिरं जीव।

(१९) प्रतिहतं खल्वेतत्, त्वमपि शङ्खचूडनिर्विशेषः पुत्रः, अथवा शङ्खचूड़ादप्यधिकतरं, य एवं बन्धुजनपरित्यक्तमपि पुत्रकं मे शरीरप्रदानेन रक्षितुमिच्छसि।

---

(स) कर्मणैव कार्य्येणैव। सम्पादयामि करोमि परित्राणमिति शेषः।

(ह) ममेति। हे अम्ब! मातः! एतत् बध्यचिह्नं रक्तवस्त्रयुगलमिति भावः मम अर्पय देहि, यावत् येनेत्यर्थः प्रावृत्य आच्छाद्य आत्मानमिति शेषः ते तव पुत्रस्य जीवितरक्षणाय विनतात्मजाय गरुत्मते स्वदेहम् आहारयितुं भक्षयितुं ददामि। उपजाति वृत्तम्।

(च) महासत्त्वस्य महाप्राणिनः महोत्साहस्य वा।

विश्वामित्रः श्वमांसं श्वपच इव पुराभक्षयद् यन्निमित्तं
नाडीजङ्घो निजघ्ने कृततदुपकृतिर्यत्कृते गौतमेन ।
पुत्रोऽयं काश्यपस्य प्रतिदिनमुरगानत्ति तार्क्ष्यो यदर्थं
प्राणांस्तानेष साधुस्तृणमिव कृपया यः परार्थं ददाति
॥ ६३ ॥ (क)

[नायकमुद्दिश्य] भो महासत्त्व! त्वया दर्शिता एव आत्मप्रदानव्यवसायनिर्व्याजा मयि कृपालुता, तदलमनेन निर्बन्धेन (ख) पश्य ।

जायन्ते च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः ।
परार्थे बद्धकक्षाणां त्वादृशामुद्भवः कुतः ? ॥ ६४ ॥ (ग)

(क) विश्वामित्र इति । विश्वामित्रः पुरा पूर्वस्मिन् काले श्वपच इव चाण्डाल इव यन्निमित्तं येषां प्राणानां रक्षणार्थमित्यर्थः श्वमांसं कुक्कुरजघनमांसमित्यर्थः अभक्षयत्, तदुक्तं मनुना, क्षुधार्त्तश्चात्तुमभ्यागाद् विश्वामित्रः श्वजाघनीम् । चाण्डालहस्तादादाय धर्माधर्मविचक्षण इति । गौतमेन मुनिना कृता तस्य गौतमस्य उपकृतिरुपकारो येन तथोक्तो नाड़ीजङ्घः तदाख्यो मुनिविशेषः यत्कृते येषां प्राणानां कृते रक्षणार्थमित्यर्थः निजघ्ने निहतः । अयं काश्यपस्य पुत्रः तार्क्ष्यः गरुत्मान् यदर्थं येषां प्राणानां रक्षणार्थं प्रतिदिनम् उरगान् नागान् अत्ति भक्षयति, य एष साधुः परार्थे परप्राणरक्षणार्थे कृपया तान् प्राणान् तृणमिव ददाति । स्रग्धरावृत्तम् ।

(ख) आत्मेति । आत्मनः स्वदेहस्य प्रदाने यो व्यवसायः उद्योगः तेन निर्व्याजा अकपटा । निर्बन्धेन आग्रहेण ।

(ग) जायन्ते इति । मद्विधाः मादृशाः क्षुद्रजन्तवः नीचप्राणिनः जायन्ते च उत्पद्यन्ते च म्रियन्ते पञ्चत्वमायान्ति च, परार्थे पररक्षणार्थे बद्धकक्षाणां संयतकटीनां सन्नद्धानामित्यर्थः त्वादृशां त्वत्सदृशानाम् उद्भवः कुतः ? न कुत्रापि त्वादृशा उद्भवन्तीत्यर्थः ।



तत् किमनेन निर्बन्धेन मुच्यतामयमध्यवसायः (घ) ।

नायकः । शंखचूड़! न मे चिराल्लब्धावसरस्य अस्य परार्थसम्पादनामनोरथस्यान्तरायं कर्त्तुमर्हसि, तदलं विकल्पेन (ङ) दीयतामेतद् वध्यचिह्नम् ।

शंख । भो महासत्त्व! किमनेन वृथात्मायासेन? न खलु शंखधवलं शंखपालकुलं शंखचूड़ो मलिनीकरिष्यति, यदि ते वयमनुकम्पनीयाः, तदा इयमस्मद्विपत्तिविक्लवा मा यथा जीवितं जह्यात् (च) तथाभ्युपायश्चिन्त्यताम् ।

नायकः । किमत्र चिन्त्यते ? ।

म्रियते म्रियमाणे या त्वयि जीवति जीवति ।
तां यदिच्छसि जीवन्तीं रक्षात्मानं ममासुभिः ॥ ५६ ॥ (छ)

अयमभ्युपायः (ज) तदर्पय त्वरितं वध्यचिह्नम्, यावदनेनात्मानं प्रच्छाद्य वध्यशिलामारोहामि, त्वमपि जननीं पुरस्कृत्य अस्माद्देशान्निवर्त्तस्व, कदाचिदम्बा आलोक्य घातस्थानं सन्निकृष्टं स्त्रीस्वभावकातरत्वेन जीवितं जह्यात्,

(घ) अध्यवसायः उद्योगः ।

(ङ) चिरात् दीर्घकालात् परमिति शेषः लब्धावसरस्य प्राप्तकालस्य । परार्थेति परार्थस्य परकार्य्यस्य सम्पादनायां निर्वहणे यः मनोरथः अभिलाषः तस्य । अन्तरायं विघ्नम् । विकल्पेन अन्यथा कल्पनेन ।

(च) शङ्खपालेति । शङ्खपालस्य शङ्खचूड़जनकस्य कुलम् । जह्यात् त्यजेत् ।

(छ) म्रियते इति । या त्वयि म्रियमाणे म्रियते, त्वयि जीवति जीवति, तां तव मातरमित्यर्थः यदि जीवन्तीमिच्छसि, तदा मम असुभिः प्राणैः आत्मानं रक्ष ।

(ज) अयमभ्युपायः तव मातुः प्राणरक्षणे इति शेषः ।

किं न पश्यति भवानिदं विपन्नपन्नगानेककङ्कालसंकुलं (झ) महाश्मशानम् ? तथाहि,

चञ्चच्चञ्चुग्रकृत्तच्युतपिशितलवग्राससंवृद्धगर्द्धै-
र्गृध्रैरावद्धपक्षद्वितविधुतिभिर्बद्धसान्द्रान्धकारे।
वक्त्रोद्वान्ताः पतन्त्यः, शमितशिखिशिखाश्रेणयोऽस्मिन् शिवानां
अस्रस्रोतस्यजस्रस्रुतिवहलवसा,वासविस्रे, स्वनन्ति ॥ ६६ ॥ (ञ)

शंख। कथं न पश्यामि ?।

प्रतिदिनमहिनाहारेण विनायकाहितप्रीति।
शशिधवलास्थिकपालं वपुरिव रौद्रं श्मशानमिदम् ॥६७॥ (ट)

---

(झ) विपन्नेति। विपन्नानां पन्नगानां नागानाम् अनेकैः बहुभिः कङ्कालैः अस्थिभिः सङ्कुलं व्याप्तम्।

(ञ) चञ्चदिति। चञ्चता चलता चञ्चोरग्रेण गरुड़स्येति शेषः कृत्तं छिन्नं सत् च्युतं भ्रष्टं यत् पिशितं मांसं तस्य लवस्य खण्डस्य ग्रासे भक्षणे संवृद्धा सञ्जाता गर्द्धा लिप्सा येषां तादृशैः मांसखण्डलोलुपैरित्यर्थः गृध्रैः श्मशानीयपक्षिविशेषैः आवद्धस्य पक्षद्वितस्य पक्षद्वयस्य विधुतिभिः कम्पनैः सञ्चालनैरिति यावत् वद्धः सङ्घटितः सान्द्रः घनः अन्धकारो यस्मिन् तादृशे, तथा अजस्रा अविरता स्रुतिः स्रावो यासां तथाभूतानां वहलानां प्रभूतानां वसानां मेदसां वासेन संसर्गेण विस्रे आमगन्धिनि विस्रं स्यादामगन्धि यदित्यमरः। अस्मिन् अस्राणां रुधिराणां स्रोतसि प्रवाहे शिवानां शृगालाणां वक्त्रेभ्यः मुखेभ्यः उद्वान्ताः उद्गीर्णाः सत्य पतन्त्यः अतएव शमिताः निर्वाणं गताः शिखिनाम् अग्नीनां सुखस्थितानामिति भावः शिखाश्रेणयः स्वनन्ति शब्दायन्ते। स्रग्धरावृत्तम्।

(ट) प्रतिदिनमिति। प्रतिदिनम् अहिना आहारेण अन्यत्र महिनाहारेण, विनायकस्य वीनां पक्षिणां नायकस्य स्वामिनः गरुड़स्य इत्यर्थः अन्यत्र विनायकस्य गणपतेः विनायको विघ्नराजद्वैमातुरगणाधिपा इत्यमरः। आहिता



नायकः। शंखचूड़! तद्गच्छ, किमिभिः सामोपन्यासैः ? (ठ)।

शंख। आसन्नः (ड) खलु गरुड़स्यागमनसमयः। [मातुरग्रतो जानुभ्यां स्थित्वा] अम्ब! त्वमपि निवर्त्तस्वेदानीम्।

समुत्पत्स्यामहे मातर्यस्यां यस्यां गतौ वयम्।
तस्यां तस्यां प्रियसुते! माता भूयास्त्वमेव नः ॥६८॥ (ढ)

[पादयोः पतति]

वृद्धा। [सास्रम्] कहं अपच्छिमवअणं (ण) पुत्तअ! ण क्खु तुमं उज्झिअ मे पाआ अण्णदो वहन्ति, ता इह एव्व तुए सह चिट्ठिस्सं (२०)।

---

(२०) कथमपश्चिमवचनं पुत्रक! न खलु त्वाम् उज्झित्वा मे पादा अन्यतो वहन्ति, तदिहैव त्वया सह स्थास्यामि।

---

जनिता प्रीतिर्यत्र तादृशं शशिधवलं चन्द्रवत् शुभ्रम् अस्थि एव कपालं नरशिरः यत्र तथाभूतम् अतएव इदं श्मशानं रौद्रं रुद्रस्येदं वपुरिव शरीरमिव विभातीति शेषः।

(ठ) सामोपन्यासैः सान्त्ववचनैः।

(ड) आसन्नः सन्निहितः।

(ढ) समुत्पत्स्यामहे इति। हे प्रियसुते प्रियपुत्रे मातः! वयं यस्यां यस्यां गतौ जाताविल्यर्थः समुत्पत्स्यामहे जनिष्यामहे, तस्यां तस्यां त्वमेव नः अस्माकं माता भूयाः।

(ण) अपश्चिमवचनं नास्ति पश्चिमं पश्चात् यस्य तादृशं वचनं नातःपरं ते वचनं श्रोष्यामीति भावः।

शंख। [उत्थाय] जवादहमपि अदूरे भगवन्तं दक्षिणगोकर्णं प्रदक्षिणीकृत्य स्वाम्यादेशमनुतिष्ठामि (त)। [उभौ निष्क्रान्तौ]।

नायकः। [दृष्ट्वा सहर्षमात्मगतम्] दिष्ट्या सिद्धमभिवाञ्छितम् अनेन अतर्कितोपनतेन (थ) रक्तांशुकयुगलेन।

प्रविश्य।

कञ्चुकी। इदं वासयुगं देव्या मित्रावसुजनन्या कुमाराय प्रेषितम्, तदेतत् परिधत्तां कुमारः।

नायकः। [सादरम्] उपनय।

कञ्चुकी। [उपनयति]।

नायकः। [गृहीत्वा आत्मगतम्] सफलीभूतो मे मलयवत्याः पाणिग्रहः। [प्रकाशम्] कञ्चुकिन्! गम्यतां, मद्वचनादभिवादनीया देवी।

कञ्चुकी। यदाज्ञापयति कुमारः। [इति निष्क्रान्तः]

नायकः। वासोयुगमिदं रक्तं प्राप्ते काले समागतम्।
महतीं प्रीतिमाधत्ते परार्थे देहमुज्झतः ॥६८॥(द)

[दिशोऽवलोक्य] यथायं चलितमलयाचलशिलास-

---

(त) जवात् वेगात्। दक्षिणगोकर्णं तदाख्यं शिवलिङ्गमित्यर्थः। स्वाम्यादेशं स्वामिनः प्रभोर्नागराजस्य आदेशम्।

(थ) अतर्कितोपनतेन असम्भावितोपस्थितेन।

(द) वासोयुगमिति। प्राप्ते काले उपयुक्ते समये समागतम् इदं रक्तं वासोयुगं वस्त्रयुगलं परार्थे देहम् उज्झतः त्यजतः मे मम महतीं प्रीतिम् आधत्ते जनयति।



च्चयः प्रचण्डो नभस्वान् (ध) तथा तर्कयामि आसन्नीभूतः खलु पक्षिराज इति। तथाहि,

तुल्याः संवर्त्तकाभ्रैः पिदधति गगनं पङ्क्तयः पक्षतीनां,
तीरे वेगानिलोऽम्भः क्षिपति भुव इव प्लावनायाम्बुराशेः।
कुर्वन् कल्पान्तशङ्कां सपदि च सभयं वीक्षितो दिग्द्विपेन्द्रैः
देहोद्योतैर्दशाशाः कपिशयति मुहुर्द्वादशादित्यदीप्तिः
॥७०॥(न)

तद् यावदसौ नागच्छेत् शङ्खचूड़ः, तावत् त्वरिततरमिमां बध्यशिलामारोहामि। [तथा कृत्वा उपविश्य स्पर्शं नाटयति] अहो स्पर्शोऽस्याः।

न तथा सुखयति मनो मलयवती मलयचन्दनरसार्द्रा।
अभिवाञ्छितार्थसिद्धैः बध्यशिलेयं यथाश्लिष्टा ॥७१॥(प)

---

(ध) चलितेति। चलितः स्वस्थानात् भ्रष्टः मलयाचलस्य शिलासञ्चयः यस्मात् तथाभूतः प्रचण्डः महान् नभस्वान् वायुः।

(न) तुल्या इति। संवर्त्तकाभ्रैः संवर्त्तकाख्यमेघैः तुल्याः समाः पक्षतीनां पङ्क्तयः श्रेणयः गगनं पिदधति आच्छादयन्ति। वेगानिलः भुवः प्लावनाय इव अम्बुराशेः तीरे अम्भः क्षिपति। कल्पान्तशङ्कां प्रलयसन्देहं कुर्वन् जनयन् अतएव सपदि सहसा दिग्द्विपेन्द्रैः दिग्गजैः सभयं वीक्षितः दृष्टः तथा द्वादशादित्यदीप्तिः द्वादशसूर्यसन्निभः अयं गरुत्मान् देहस्य उद्योतैः प्रभाभिः मुहुः पुनः पुनः दश आशा दिशः कपिशयति कपिशाः पिङ्गलाः करोति। स्रग्धराहत्तम्।

(प) नेति। मलयचन्दनरसेन आर्द्रा लिप्ताङ्गी मलयवती आश्लिष्टा सती तथा मनो न सुखयति सुखीकरोति, अभिवाञ्छितस्य अर्थस्य परप्राणरक्षणरूपस्य सिद्धैः आश्लिष्टा आलिङ्गिता इयं बध्यशिला यथा सुखयतीति शेषः।

अथवा किं मलयवत्या ?—

शयितेन मातुरङ्के विस्रब्धं शैशवे न तत् प्राप्तम् ।
लब्धं सुखं मयास्या बध्यशिलाया यदुत्सङ्गे ॥ ७२ ॥ (फ)

तदयमागतो गरुत्मान्, यावदात्मानमाच्छादयामि । [ तथा करोति ] ।

[ ततः प्रविशति गरुडः ]

गरुडः ।

दृष्ट्वा विम्बं हिमांशोर्भयकृतवलयां संस्मरन् शेषमूर्त्तिं
सानन्दं स्यन्दनाश्वत्रसनविचलिते पूष्णि दृष्टोऽग्रजेन ।
एष प्रांशावसज्जज्जलधरपटलैरायतीभूतपक्षः
प्राप्तो वेलामहीध्रं मलयमहमहिग्रासगृध्नुः क्षणेन ॥७३॥(ब)

नायकः । [ सपरितोषम् ]

(फ) शयितेनेति । शैशवे वाल्ये मातुः अङ्के क्रोड़े विस्रब्धं निःशङ्कं शयितेन मया तत् सुखं न प्राप्तम्, अस्या बध्यशिलाया उत्सङ्गे क्रोड़े शयितेन यत् सुखं प्राप्तमिति शेषः ।

(ब) दृष्ट्वेति । हिमांशोश्चन्द्रस्य विम्बं दृष्ट्वा भयेन मत्त इति शेषः कृतं वलयं मण्डलाकारेण अवस्थानं यया तादृशीं सङ्कुचन्तीमित्यर्थः शेषस्य अनन्तनामस्य मूर्त्तिं संस्मरन्, स्यन्दनाश्वानां रथाश्वानां त्रसनेन मत्त इति शेषः विचलिते कथमेते ममाश्वास्त्रस्ता इति चकिते इति यावत् पूष्णि सूर्य्ये अग्रजेन ज्येष्ठेन अरुणेन सानन्दं भ्राताय़ं मे यातीति साह्लादं दृष्टः, तथा प्रांशैः अतएव अवसज्जद्भिः लग्नद्भिः जलधरपटलैः आयतीभूताः दीर्घीभूताः विस्तारं गता इत्यर्थः पक्षा यस्य तथोक्तः एषः अहम् अहीनां नागानां ग्रासे भक्षणे गृध्नुः लोलुपः सन् क्षणेन वेलामहीध्रं समुद्रतटस्थितं मलयपर्वतं प्राप्तः । स्रग्धरावृत्तम् ।



संरक्षता पन्नगमद्य पुण्यं
मयार्जितं यत् स्वशरीरदानात् ।
भवे भवे तेन ममैव भूयात्
परार्थहेतोः खलु देहलाभः ॥ ७४ ॥ (भ)

गरुडः । [ नायकं निर्वर्ण्य ]

अस्मिन् बध्यशिलातले निपतितं शेषानहीन् रक्षितुं
निर्भिद्याशनिचण्डचण्डतरया चञ्च्वाधुना वक्षसि ।
भोक्तुं भोगिनमुद्धरामि तरसा रक्ताम्बरप्रावृतं
दिग्धं मद्भयदीर्यमाणहृदयप्रस्यन्दिनेवासृजा ॥ ७५ ॥ (म)

[ इत्यभिपत्य नायकं गृह्णाति, नेपथ्ये पुष्पाणि पतन्ति, दुन्दुभयश्च स्वनन्ति ]

गरुडः । [ सविस्मयम् ] अये !

आमोदानन्दितालिर्निपतति किमियं पुष्पवृष्टिर्नभस्तः
स्वर्गे किं वैष चक्रं मुखरयति दिशां दुन्दुभीनां निनादः ।

(भ) संरक्षतेति । अद्य स्वशरीरदानात् पन्नगं संरक्षता मया यत् पुण्यम् अर्जितम् अनुष्ठितं तेन पुण्येन भवे भवे जन्मनि जन्मनि परार्थहेतोः खलु पररक्षार्थमेव मम देहलाभो भूयात् । उपजातिवृत्तम् ।

(म) अस्मिन्निति । शेषान् अहीन् नागान् रक्षितुम् अस्मिन् बध्यशिलातले निपतितम् एनमिति शेषः अधुना अशनिचण्डचण्डतरया वज्रेणेव अतिप्रचण्डया चञ्च्वा वक्षसि निर्भिद्य रक्ताम्बरप्रावृतं रक्तवस्त्राच्छादितम् अतएव मत्तो भयेन दीर्य्यमाणात् हृदयात् प्रस्यन्दिना स्रवता असृजा रुधिरेण दिग्धमिव लिप्तमिव भोगिनं पन्नगं भोक्तुं तरसा बलेन वेगेन वा उद्धरामि । शार्दूलविक्रीड़ितं वृत्तम् ।

विहस्य ।

आः ज्ञातं सोऽपि मन्ये मम जवमरुता कम्पितः पारिजातः
सर्वैः संवर्त्तकाभ्रैरिदमपि रणितं जातसंहारशङ्कैः ॥ ७६ ॥
( य )

नायकः । [ आत्मगतम् ] दिष्ट्या कृतार्थोऽस्मि ।

गरुड़ः । [ नायकं कलयन् ] ( र ) ।

नागानां रक्षिता भाति पुरुषेषु यथा मम ।
तथा सर्पाशनाकांक्षां व्यक्तमद्यापनेष्यति ॥ ७७ ॥ ( ल )

तद् यावदेनं गृहीत्वा मलयपर्वतमारुह्य यथेष्टमाहारयामि । [ इति निष्क्रान्तः ] ।

इति निष्क्रान्ताः सर्वे ।

इति चतुर्थोऽङ्कः ।

---

( य ) आमोदेति । आमोदेन सौरभेण आनन्दिता अलयो भ्रमरा यया तादृशी पुष्पाणां वृष्टिः इयं किं कथं नभसः आकाशात् निपतति ? किंवा कथं वा स्वर्गे एष दुन्दुभीनां निनादः दिशां चक्रं दिङ्मण्डलं मुखरयति ध्वनयति ?

आः ज्ञातमिति । आः ज्ञातं सम्यक् विदितं मम जवमरुता वेगानिलेन सोऽपि पारिजातः कम्पितः तेनैतत् पुष्पवृष्टिरिति भावः सर्वैश्च संवर्त्तकाद्यैः तदाख्यमेघनिचयैः जाता संहारस्य प्रलयस्य शङ्का येषां तथाभूतैः सद्भिः इदं रणितं शब्दायितमपि इति मन्ये सम्भावयामि । स्रग्धरावृत्तम् ।

( र ) कलयन् अवलोकयन् ।

( ल ) नागानामिति । नागानां रक्षिता कोऽपि अयं पुरुषेषु मध्ये यथा भाति राजते तथा व्यक्तं निश्चितम् अद्य मम सर्पाणाम् अशनाकाङ्क्षां भोजनेच्छाम् अपनेष्यति ।

---

## अथ पञ्चमोऽङ्कः ।

[ ततः प्रविशति प्रतीहारः ]

प्रती । स्वगृहोद्यानगतेऽपि स्निग्धे पापं विशङ्क्यते स्नेहात् ।
किमु दृष्टबह्वपायप्रतिभयकान्तारमध्यस्थे ॥७८॥ ( क )

तथाहि—जीमूतवाहनो जलनिधिवेलावलोकनकुतूहली निष्क्रान्तश्चिरयतीति दुःखमास्ते महाराजविश्वावसुः । समादिष्टश्चास्मि तेन । यथा—सुनन्द ! श्रुतं मया सन्निहितगरुड़प्रतिभयमुद्देशं जामाता जीमूतवाहनो गत इति शङ्कित एवास्मि अनेन । तत् त्वरितं विज्ञायागच्छ किमसौ स्वगृहमागतो नवेति । यावत्तत्र गच्छामि । [ परिक्रामन्नग्रे दृष्ट्वा ।] अयमसौ राजर्षिर्जीमूतवाहनस्य पिता जीमूतकेतुरुटजाङ्गने सह स्वधर्मचारिण्या राजपुत्र्या च पर्य्युपास्यमानस्तिष्ठति ( ख ) । तथाहि ।

---

( क ) स्वगृहेति । स्निग्धे स्नेहभाजने जने स्वस्य गृहस्य उद्यानगतेऽपि स्नेहात् पापम् अनिष्टं विशङ्क्यते मन्यते, दृष्टः बहुः अपायः विनाशः यत्र तादृशं प्रतिभयं भयङ्करं भीषणं भयङ्करं प्रतिभयमित्यमरः । यत् कान्तारं दुर्गमं वनं कान्तारौ वर्त्म दुर्गममित्यमरः । तत्र तिष्ठतीति तथाभूते स्निग्धे किम् ? किं वक्तव्यं शङ्कायामित्यर्थः । आर्य्यावृत्तम् ।

( ख ) सन्निहितेति । सन्निहितेन समागतेन गरुड़ेन प्रतिभयं भयङ्करम् । पर्य्युपास्यमानः सेव्यमानः ।

क्षौमे भङ्गवती तरङ्गतरले फेनाम्बुतुल्ये वहन्
जाह्नव्येव विराजित: सुपयसा देव्या महापुण्यया।
धत्ते तोयनिधेरयं सुसदृशीं जीमूतकेतु: श्रियं
यस्यैषान्तिकवर्त्तिनी मलयवत्याभाति वेला यथा ॥७ ॥
(ग)

तद् यावदुपसर्पामि।

[ तत: प्रविशति पत्नीवधूसमेतो जीमूतकेतु: ]

जीमू। भुक्तानि यौवनसुखानि यशोऽवकीर्णं
राज्ये स्थितं स्थिरधिया चरितं तपोऽपि।
श्लाघ्य: सुत: सुसदृशान्वयजा स्नुषेयं
चिन्त्यो मया ननु कृतार्थतयाद्य मृत्यु: ॥ ८० ॥ (घ)

---

(ग) क्षौमे इति। भङ्गवती भङ्गिमती इत्यर्थ: तरङ्गतरले ऊर्मिचपले फेनाम्बुतुल्ये फेनजलनिभे क्षौमे पट्टदुकूले वहन् दधान: सुपयसा विशदाम्बुना जाह्नव्या इव महापुण्यया अतिपवित्रया देव्या महिष्या विराजित: शोभित: अयं जीमूतकेतु: तोयनिधे: समुद्रस्य सुसदृशीम् अनुरूपां श्रियं शोभां धत्ते धारयति, एषा मलयवती यस्य अन्तिकवर्त्तिनी समीपवर्त्तिनी वेला यथा तटीव वेला स्यात्तीर-नीरयोरित्यमर:। आभाति भ्राजते। शार्दूलविक्रीडितं वृत्तम्।

(घ) भुक्तानीति। मया यौवनसुखानि भुक्तानि, यशसा अवकीर्णे आच्छादिते पूर्णे इत्यर्थ: राज्ये स्थितं यशसा सह राज्यं पालितमित्यर्थ:, स्थिर-धिया अनन्यमनसा इत्यर्थ: तप: चान्द्रायणादिकमपि चरितं कृतम्। सुत: पुत्र: जीमूतवाहन: ममेति शेष: श्लाघ्य: सर्वजनप्रशंसनीय इत्यर्थ: इयञ्च सुसदृशान्वया अनुरूपवंशोद्भवा स्नुषा पुत्रवधू: मलयवतीत्यर्थ: ननु अतएव अद्य इदानीं मया कृता-



सुनन्द:। [ सहसोपसृत्य ] जीमूतवाहनस्य।

जीमू। [ कर्णौ पिधाय ] शान्तं पापम्।

वृद्धा। पड़िहदं क्खु एदं अमङ्गलं (१)।

मलयवती। वेवदि मे हिअअं इमिणा दुण्णिमित्तेण (२)।

जीमू। [ वामाक्षिस्पन्दनं सूचयित्वा ] भद्र ! किं जीमूत-वाहनस्य।

सुनन्द:। जीमूतवाहनस्य वार्त्तामन्वेष्टुं महाराजविश्वा-वसुना युष्मदन्तिकं प्रेषितोऽस्मि।

जीमू। किमसन्निहितस्तत्र मे वत्स:।

वृद्धा। [ सविषादम् ] महाराअ ! जइ तहिं ण सण्णि-हिदो ता कहिं गदो मे पुत्तओ भविस्सदि (३)।

जीमू। नूनमस्मत्प्राणरक्षार्थं (ङ) गतो भविष्यति।

मल। [ सविषादमात्मगतम् ] अहं उण अज्जउत्तं अपे-क्खन्ती अण्णं एव्व किम्पि आसङ्कामि (४)।

सुनन्द:। आज्ञापय। किं मया स्वामिनो निवेदनीयम्।

---

(१) प्रतिहतं खल्वेतदमङ्गलम्।

(२) वेपते मे हृदयमनेन दुर्निमित्तेन।

(३) यदि तत्र न सन्निहितस्तत् क्व गतो मे पुत्रको भविष्यति।

(४) अहं पुनरार्य्यपुत्रमप्रेक्षमाणा अन्यदेव किमपि आशङ्के।

---

र्थया सर्वेषु विषयेषु चरितार्थतया मृत्यु: चिन्त्य: प्रार्थनीयत्वेनेति भाव:। इत्थं कृतकृत्योऽहं कदा मृत्युमुखं पश्यामीति चिन्तयामीत्यर्थ:। वसन्ततिलकं वृत्तम्।

(ङ) अस्मत्प्राणरक्षार्थम् अस्माकं जीविकासमाहरणार्थमित्यर्थ:।

जीमू। [वामाक्षिस्पन्दनं सूचयित्वा] जीमूतवाहन-श्चिरयतीति पर्याकुलोऽस्मि हृदयेन।

स्फुरसि किमु दक्षिणेतर! मुहुर्मुहुः सूचयन्ममानिष्टम्।
हतचक्षुरपहतं ते स्फुरितमिहायं करिष्यते भानुः॥ ८१॥

(च)

[ऊर्द्ध्वमवलोक्य] अयमेव त्रिभुवनैकचक्षुर्भगवान् सहस्रदीधितिः स्फुटं जीमूतवाहनस्य श्रेयः करिष्यति।
[विलोक्य सविस्मयम्]।

आलोक्यमानमतिलोचनदुःखदायि
रक्तच्छटा निजमरीचिरुचो विमुञ्चत्।
उत्पातवाततरलीकृततारकाभम्
एतत्पुरः पतति किं सहसा नभस्तः॥ ८२॥ (छ)

(च) स्फुरसीति। हे दक्षिणेतर! हतचक्षुः दुर्नेत्र! मुहुः मुहुः पुनः पुनः मम अनिष्टं सूचयत् प्रकटयत् किमु किमर्थं स्फुरसि स्पन्दसे? अयं भानुः सूर्यः इह मदङ्के इति भावः ते तव स्फुरितम् अपहतं विनाशितं करिष्यति सूर्यदेवस्य प्रसादेन दक्षिणाङ्गस्पन्दनरूपं दुर्निमित्तं नश्यतीति भावः।

(छ) आलोक्यमानमिति। आलोक्यमानं दृश्यमानम् अतिलोचनदुःखदायि नयनयोरतिदुःखदं निजमरीचिरुचः निजस्य स्वस्य मरीचीनां प्रभाणामिव रुचः प्रभा यासां तादृशीः रक्तानां छटा धाराः मुञ्चत् त्यजत्, तथा उत्पातवातेन दुर्निमित्तपवनेन तरलीकृता चञ्चलीकृता भंशिता इत्यर्थः या तारका नक्षत्रं तस्येव आभा यस्य तादृशम् एतत् किं वस्तु सहसा नभसः अन्तरीक्षात् पुरः अग्रतः पतति? वसन्ततिलकं वृत्तम्।



कथं चरणयोरेव पतितम्। [सर्वे निरूपयन्ति]।

जीमू। अये! कथं लग्नसरसमांसश्चूड़ामणिः (ज)। कस्य पुनरयं स्यात्?

वृद्धा। [सविषादम् महाराअ! पुत्तअस्स विअ मे एदं चूड़ारअणं (५)।

मल। अम्ब! मा एव्वं भण (६)।

सुनन्दः। महाराज! मैवमविज्ञाय विक्लवी भूः। अत्र हि तार्क्ष्येण भक्ष्यमाणानां नागाधिपानामनेके नखमुखोत्खाताः (झ) पतन्त्येते शिरोमणयः।

जीमू। देवि! सोपपत्तिकमभिहितम् (ञ)। कदाचिदेवमपि स्यात्।

वृद्धा। सुणन्दअ! जाव इमाए वेलाए ससुरसदणं एव्व आगदो मे पुत्तको भविस्सदि। ता गच्छ जाणिअ लहुं सम्पादेहि (ट)। (७)

(५) महाराज! पुत्रकस्येव मे एतच्चूड़ारत्नम्।

(६) अम्ब! मैवं भण।

(७) सुनन्दक! यावदनया वेलया श्वशुरसदनमेवागतो मे पुत्रको भविष्यति। तद्गच्छ ज्ञात्वा लघु सम्पादय।

(ज) लग्नेति। लग्नं सरसम् आर्द्रं रक्ताक्तमिति यावत् मांसं यस्मिन् तथाभूतः। चूड़ामणिः शिरोरत्नम्।

(झ) तार्क्ष्येण गरुड़ेन। नखमुखेन नखाग्रेण उत्खाता उत्पाटिताः।

(ञ) सोपपत्तिकं सयुक्तिकम्।

(ट) सम्पादय आगच्छेत्यर्थः।

सुनन्दः। यदाज्ञापयति देवी। [ इति निष्क्रान्तः ]।

जीमू। देवि ! अपि नागचूडामणिः स्यात्।

[ ततः प्रविशति रक्तवस्त्रसंवीतः ( ठ ) शङ्खचूडः ]

शङ्ख। [ सास्रम् ]

गोकर्णमर्णवतटे त्वरितं प्रणम्य
प्राप्तोऽस्मि तां खलु भुजङ्गमवध्यभूमिम्।
आदाय तं नखमुखक्षतवक्षसञ्च
विद्याधरं गगनमुत्पतितो गरुत्मान् ॥ ८३ ॥ (ड)

[ रुदन् ] हा महासत्त्व ! हा परमकारुणिक ! हा निष्कारणैकबान्धव ! हा परदुःखदुःखित ! क्व गतोऽसि प्रयच्छ मे प्रतिवचनम्। हा शङ्खचूड़हतक ! किं कृतं त्वया ?

नाह्निवाणा कीर्त्तिरेकाहमाप्ता
नापि श्लाघ्या स्वामिनोऽनुष्ठिताज्ञा।

---

( ठ ) रक्तेति। रक्तवस्त्राभ्यां संवीतः आच्छादितः।

( ड ) गोकर्णेति। अर्णवतटे समुद्रतीरे गोकर्णं तदाख्यं शिवलिङ्गं प्रणम्य त्वरितं सत्वरं भुजङ्गमानां बध्यभूमिं प्राप्तः आगतः अस्मि खलु। गरुत्मांश्च नखमुखेन नखाग्रेण क्षतं विदीर्णं वक्षो यस्मिन् तद्यथा तथा तं विद्याधरम् आदाय गृहीत्वा गगनम् आकाशम् उत्पतितः। अत्र प्राप्त्युत्पतनक्रिययोर्यौगपद्यात् समुच्चयोऽयमलङ्कारः। तदुक्तं दर्पणे, समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके। खले कपोतिकान्यायात् तत्करस्येत् परोऽपि चेत्। गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये इति। वसन्ततिलकं वृत्तम्।

( ढ ) नेति। हा शङ्खचूड़ हतक इति आत्मानं प्रति आक्षेपोक्तिः त्वया एकाहम् अपिरक्षाध्याहार्य्यः एकदिनमपीत्यर्थः अहीन् भुजङ्गान् त्रायते इति,



दत्त्वात्मानं रक्षितोऽन्येन शोच्यो
हा धिक् ! कष्टं ! वञ्चितो वञ्चितोऽसि ॥ ८४ ॥ (ढ)

तन्नाहमेवंविधः क्षणमपि जीवन्नुपहास्यमात्मानं करोमि। यावदेतदनुगमनं प्रति यतिष्ये। [ परिक्रामन् भूमौ दत्तदृष्टिः ]।

आदावुत्पीड़पृथ्वीं प्रविरलपतितस्थूलबिन्दुं ततोऽग्रे
ग्रावस्वायामशीर्णप्रसृततनुकणां कीटकीर्णां स्थलीषु।
दुर्लक्ष्यां धातुभिन्ने घनतरुशिखरे स्त्यानलीलस्वरूपाम्
एनां तार्क्ष्यं दिदृक्षुर्निपुणमनुसरन् रक्तधारां व्रजामि ॥८५॥
( ण )

---

अह्निवाणा कीर्त्तिः न आप्ता न प्राप्ता एकाहमपि मया भुजङ्गास्त्राता इति कीर्त्तिर्न लब्धा। स्वामिनः प्रभोः नागराजस्येत्यर्थः श्लाघ्या आदरणीया आज्ञा नापि अनुष्ठिता त्वयाद्य भुजङ्गशववे आत्मा देय इति स्वाम्यादेशो न पालित इत्यर्थः। अन्येन केनचित् साधुनेत्यर्थः आत्मानं दत्त्वा रक्षितः परित्रातः असि, हा कष्टं शोच्यः शोचनीयः बन्धुभिरिति शेषः तथा वञ्चितः वञ्चितः अतिशयेन वञ्चितः विधिनेति शेषः असि, धिक् त्वां निन्दामीत्यर्थः धिक् निर्भर्त्सननिन्दयोरित्यमरः।

( ण ) आदाविति। अहं तार्क्ष्यं गरुत्मन्तं दिदृक्षुः द्रष्टुमिच्छुः अनुजिगमिषुरिति भावः आदौ प्रथमम् उत्पीड़ेन उत्पीड़नेन सुदृढनिपीड़नेनेति यावत् पृथ्वीं महतीं ततः अनन्तरम् अग्रे पुरतः प्रविरला अघनाः पतिताः स्थूला बिन्दवो यस्यास्तादृशीं तत इत्यध्याहार्य्यं ग्रावसु शिलासु आयामेन दैर्घ्येण शीर्णाः चूर्णिताः प्रसृताः विस्तृताः तनवः क्षुद्राः कणाः यस्यास्तथाभूतां स्थलीषु वनभूमिषु कीटैः क्षुद्रजीवैः पिपीलिकादिभिरित्यर्थः कीर्णां व्याप्तां, धातुभिः गैरिकादिभिर्भिन्ने

वृद्धा। [ससाध्वसम्] महाराअ! एसो ससोओ विअ अरुणवअणो इदो एव्व तुरितं आअच्छन्तो हिअअं मे आकुलीकरेदि। ता जाणीअदु दाव को एसोत्ति (८)।

जीमू। यथाह देवी। [आकर्ण्य सहर्षं विहस्य] देवि! मुञ्च शोकम्। अस्यायं चूडामणिर्नूनं मांसलोभात् केनापि पक्षिणा मस्तकादुत्खाय आनीयमानोऽस्यां भूमौ पपात।

वृद्धा। [सपरितोषम्—मलयवतीं समालिङ्ग्य] अविधवे! धीरा होहि। ण क्खु ईदिसी आकिदी वेहव्वदुक्खं अणुहोदि (९)।

मल। [सहर्षम्] अम्ब! तुम्हाणं आसिसां पसाएण (१०)। [पादयोः पतति]।

जीमू। वत्स! कथमिव।

(८) महाराज! एष सशोक इव अरुणवदन इत एव त्वरितमागच्छन् हृदयं मे आकुलीकरोति। तत् ज्ञायतां तावत् क एष इति।

(९) अविधवे! धीरा भव। न खल्वीदृशी आकृतिर्वैधव्यदुःखमनुभवति।

(१०) अम्ब! युष्माकमाशिषां प्रसादेन।

रञ्जिते प्रदेशे इति शेषः दुर्लक्ष्यां दुर्दृश्यां तुल्यवर्णत्वादिति भावः। तथा घनानां सान्द्राणां तरूणां शिखरेषु उपरिभागेषु श्यामं वृद्धिं गतं नीलं स्वरूपं यस्या-स्तथोक्तां नीलवर्णसंयोगेन नीलीभूतामिति भावः एनां रक्तधारां निपुणं यथा तथा अनुसरन् व्रजामि गच्छामि। स्रग्धरावृत्तम्।



शंख। दुःखातिभाराद् वाष्पोपरुद्धकण्ठो न शक्नोमि कथयितुम्।

जीमू। आवेदय ममात्मीयं पुत्रदुःखं सुदुःसहम्।
संक्रान्तमस्ति हृदये येन सह्यं भविष्यति ॥८६॥ (त)

शंख। श्रूयताम्। शंखचूडो नाम नागः खल्वहम् आहारार्थं वासुकिना वैनतेयाय प्रेषितः। किं वा विस्तरेण। कदाचिदियं रुधिरधारापद्धतिः पांशुभिरवकीर्यमाणा दुर्लक्ष्यतामुपयाति (थ)। तत् संक्षेपतः कथयामि।

विद्याधरेण केनापि करुणाविष्टचेतसा।
मम संरक्षिताः प्राणा दत्त्वात्मानं गरुत्मते ॥ ८७ ॥ (द)

जीमू। कोऽन्य एवं परहितव्यसनी (ध)। वत्स! ननु स्पष्टमेवोच्यतां जीमूतवाहनेनेति। हा हतोऽस्मि! मन्द-भाग्यः।

(त) आवेदयेति। आवेदय विज्ञापय, मम आत्मीयं स्वीयं सुदुःसहं पुत्रदुःखं पुत्रार्थं वैक्लव्यरूपं हृदये सक्रान्तं स्थितम् अस्ति, येन हृदयस्थितेन सह्यं तवावेदनमिति भावः भविष्यति।

(थ) रुधिरधारेति। रुधिराणां धारापद्धतिः धाराचिह्नम्। पांशुभिः धूलिभिः अवकीर्यमाणा आच्छाद्यमाना। दुर्लक्ष्यताम् अदृश्यतामित्यर्थः।

(द) विद्याधरेणेति। केनापि करुणाविष्टचेतसा विद्याधरेण गरुत्मते आत्मानं स्वदेहं दत्त्वा मम प्राणा रक्षिताः।

(ध) परेति। परेषां हिते हितानुष्ठाने व्यसनी आसक्तः निरत इत्यर्थः।

वृद्धा। हा पुत्तक! कहं तुए एदं किदं (११)।

मल। कहं सच्चीभूदं एव्व दुच्चिन्तिदं (१२)। [सर्वे मोहं गच्छन्ति]।

शंख। [सास्रम्] नूनमेतौ पितरौ तस्य महासत्त्वस्य। कथमप्रियवादिना मया इमामवस्थां नीतौ। अथवा विषाद्दते विषधरस्य मुखात् किमन्यन्निःसरति। अहो! प्राणप्रदस्य सुसदृशं प्रत्युपकृतं जीमूतवाहनस्य शंखचूडेन। तत् किमधुनैवात्मानं व्यापादयामि। अथवा समाश्वासयामि तावदेतौ। तात! समाश्वसिहि। अम्बा समाश्वसितु। [उभौ समाश्वसितः]।

वृद्धा। बच्छे! उट्ठेहि मा रोअ। अम्हे किं जीमूतवाहणेण विणा जीवम्ह। ता समस्सस दाव (१३)।

मल। [समाश्वस्य] अज्जउत्त! कहिं मए तुमं पेक्खिदव्वो (१४)।

जीमू। हा वत्स! गुरुचरणशुश्रूषाविधिज्ञ!।

चूड़ामणिं चरणयोर्मम पातयता त्वया।

लोकान्तरगतेनापि नोज्झितो विनयक्रमः ॥ ८८ ॥ न)

(११) हा पुत्रक! कथं त्वयैतत् कृतम्।

(१२) कथं सत्यीभूतमेव दुश्चिन्तितम्।

(१३) वत्से! उत्तिष्ठ। मा रुदिहि। वयं किं जीमूतवाहनेन विना जीवामः। तत् समाश्वसिहि तावत्।

(१४) आर्य्यपुत्र! क मया त्वं प्रेक्षितव्यः।

(न) चूड़ामणिमिति। त्वया मम चरणयोः चूड़ामणिं पातयता



[चूड़ामणिं गृहीत्वा।] हा वत्स! कथमेतावन्मात्रदर्शनः संवृत्तोऽसि। [हृदये दत्त्वा] अहह!!!

भक्त्या सुदूरमवनामितनम्रमौलेः

शश्वत्तव प्रणमतश्चरणौ मदीयौ।

चूड़ामणिर्निकषणैर्मसृणोऽप्यहिंस्रो

गाढं विचारयति मे हृदये कथन्नु ॥ ८९ ॥ (प)

वृद्धा। हा पुत्त जीमूदबाहण! जस्स दे गुरुजणसुस्सूसं वज्जिअ अस्सं सुहं ण रोअदि। सो कहिं दाणिं पिदरं उज्झिअ सग्गसुहमणुहोदुं गदोसि (१५)।

जीमू। [सास्रम्] देवि! किं जीमूतवाहनेन विना जीवामो वयं येनैवं प्रलपसि।

मल। [पादयोर्निपत्य कृताञ्जलिः] ता देहि मे अज्ज-

(१५) हा पुत्र! जीमूतवाहन! यस्य ते गुरुजनशुश्रूषां वर्जयित्वा अन्यत् सुखं न रोचते। स कथमिदानीं पितरमुज्झित्वा स्वर्गसुखमनुभवितुं गतोऽसि।

निक्षिपता सता लोकान्तरगतेनापि विनयक्रमः शिष्टाचारपद्धतिः न उज्झितः न त्यक्तः।

(प) भक्त्येति। भक्त्या सुदूरम् अत्यन्तम् अवनामितः नम्रः स्वभावविनतः मौलिः मस्तकं येन तादृशस्य शश्वत् सततं मदीयौ चरणौ प्रणमतः वन्दमानस्य तव चूड़ामणिः निकषणैः शाणैः मसृणोऽपि चिक्कणोऽपि अहिंस्रः कोमलः सन् हृदये मदीये धृत इति शेषः कथन्नु कथं वा गाढ़म् अत्यन्तं विचारयति कथमहं चरणयोर्य्योऽपि हृदये धार्य्यते इति तर्कयतीवेति भावः। वसन्ततिलकं वृत्तम्।

उत्तचिह्नं चूड़ामणिं जेण एदं हिअए कदुअ जलणप्पवेसेण अवणेमि हिअअस्स सन्दावदुक्खं ( १६ )।

जीमू। पतिव्रते! किमेवमाकुलयसि। ननु सर्वेषामेवास्माकमयं निश्चयः।

वृद्धा। महाराअ! ता किं अम्हेहिं पड़िपालीअदि। ( १७ )

जीमू। न खलु देवि! किञ्चित्। किन्त्वाहिताग्नेर्नान्येनाग्निना संस्कारो ( फ ) विहितः। अतोऽग्निहोत्रशरणाद्ग्नीनादायात्मानमुद्दीपयामः।

शङ्ख। [आत्मगतम्] कष्टं ममैकस्य कृते सकलमेवेदं विद्याधरकुलमुच्छिन्नम्। तदेवं तावत्। [प्रकाशम्] तात! न खल्वनिश्चित्यैव युक्तमिदमीदृशं साहसमनुष्ठातुम्। सविचाराणि हि दैवविलसितानि। कदाचिन्नायं नाग इति ज्ञात्वा परित्यजेन्नागशत्रुः। तदनयैव दिशा वैनतेयमनुसरामस्तावत्।

वृद्धा। सव्वहा देवदाणं पसादेण जीवन्तस्स पुत्तअस्स मुहं दंसेम ( १८ )।

---

( १६ ) तद्देहि मे आर्य्यपुत्रचिह्नं चूड़ामणिं येनैनं हृदये कृत्वा ज्वलनप्रवेशेन अपनयामि हृदयस्य सन्तापदुःखम्।

( १७ ) महाराज! तत् किमस्माभिः प्रतिपाल्यते।

( १८ ) सर्वथा देवतानां प्रसादेन जीवतः पुत्रस्य मुखं दर्शयामः।

---

( फ ) आहिताग्नेः अग्निहोत्रिणः अन्येन आहितातिरिक्तेन। संस्कारो दाहः।



मल। [आत्मगतम्] दुल्लहं क्खु एदं मम मन्दभग्गाए।(१९)

जीमू। वत्स! अवितथैषा तव भारतो भवतु। तथापि साग्नीनामेवास्माकं (ब) युक्तमनुसर्तुम्। तदनुसरतु भवान्। वयमप्यग्निशरणादग्निमादाय त्वरितमेवानुगच्छामः। [पत्नी-वधूसमेतो निष्क्रान्तः]।

शङ्ख। तद् यावद् गरुड़मनुसरामि। [अग्रतो निर्व्वर्ण्य]

कुर्व्वाणो रुधिरार्द्रचञ्चुकषणैर्द्रोणीरिवाद्रेर्नवाः
प्लुष्टोत्खातवनान्तरः खनयनज्योतिः शिखाश्रेणिभिः।
मज्जद्वज्रकठोरघोरनखरप्रान्तावगाढ़ावनिः
शृङ्गाग्रे मलयस्य पन्नगरिपुर्दूरादसौ दृश्यते॥ ९०॥ (भ)

[ततः प्रविशत्यासनस्थः पुरःपतितनायको गरुड़ः]

गरुड़ः। जन्मनः प्रभृति भुजङ्गपतीन् अश्नता नेदमाश्चर्य्यं मया दृष्टपूर्व्वम्। यदयं महात्मा न केवलं न व्यथते। प्रहृष्ट इव किमपि दृश्यते। तथाहि

---

( १९ ) दुर्लभं खल्वेतत् मम मन्दभाग्यायाः।

---

( ब ) साग्नीनाम् अग्निसहितानां गृहीताग्नीनामित्यर्थः।

( भ ) कुर्वाण इति। रुधिरार्द्रयोः चञ्च्वोः कषणेन प्रहरणेन अद्रेः पर्वतस्य नवाः द्रोणीरिव नदीरिव कुर्वाणः, स्वस्य नयनयोः ज्योतिः शिखाश्रेणिभिः अर्चिःसंघातैः प्लुष्टं दग्धम् उत्खातम् उन्मूलितञ्च वनान्तरं काननावकाशो येन तथाभूतः, तथा मज्जतां वज्रकठोराणां घोराणां नखराणां प्रान्तैः अग्रैः अवगाढ़ा अवनिः पृथ्वी येन तथाविधः असौ पन्नगानां नागानां रिपुः गरुत्मान् मलयस्य शृङ्गाग्रे दूरात् दृश्यते। शार्दूलविक्रीड़ितं वृत्तम्।

ग्लानिर्नाधिकपीयमानरुधिरस्याप्यस्ति धैर्योदयै-
र्मांसोत्कर्त्तनजा रुजोऽपि वहतः प्रीत्या प्रसन्नं मुखम्।
गात्रं यन्न विलुप्तमेकपुलकस्तत्र स्फुटो दृश्यते
दृष्टिर्मय्युपकारिणीव निपतत्यस्यापकारिण्यपि ॥ ८१ ॥

(म)

ततः कुतूहलमेव जनितमस्यानया धैर्यवृत्त्या (य)।
भवतु न भक्षयाम्येवैनम्। पृच्छामि तावत् कोऽयमिति।

नायकः। शिरामुखैः स्यन्दत एव रक्त-
मद्यापि देहे मम मांसमस्ति।
तृप्तिं न पश्यामि च ते महात्मन्!
किं भक्षणात्त्वं विरतो गरुत्मन्! ॥ ८२ ॥ (र)

---

(म) ग्लानिरिति। अधिकं यथा तथा पीयमानं रुधिरं यस्य तादृश-स्यापि अस्य ग्लानिः व्यथा नास्ति, मांसानाम् उत्कर्त्तनेन खण्डनेन जायन्ते इति तथोक्ताः रुजः पीड़ा अपि वहतः अस्य धैर्योदयैः धैर्यातिरेकैः मुखं प्रसन्नं विषादो दूरमास्तामिति भावः, यत्र गात्रं शरीरं न विलुप्तं विनष्टम् अपितु तत्र एकः केवलः पुलकः रोमहर्षः परप्राणरक्षणजनितानन्दोदयादिति भावः। स्फुटः स्पष्टः दृश्यते। अस्य दृष्टिः अपकारिणि आततायिनि अपि मयि उपकारिणीव निपतति। शार्दूलविक्रीड़ितं वृत्तम्।

(य) धैर्यवृत्त्या धैर्यव्यवहारेण।

(र) शिरेति। शिराणां मुखैः रक्तं स्यन्दते स्रवत्येव, अद्यापि मम देहे मांसम् अस्ति, हे महात्मन्! ते तव तृप्तिं परितोषञ्च न पश्यामि, हे गरुत्मन्! त्वं किं कथं भक्षणात् विरतः? निवृत्तः?।



गरुड़ः। [आत्मगतम्] आश्चर्यमाश्चर्यम्! कथमस्या-मप्यवस्थायामेवमूर्ज्जितमभिधत्ते (ल)। [प्रकाशम्]।

आवर्ज्जितं मया चञ्च्वा हृदयात्तव शोणितम्।
अनेन धैर्य्येण पुनस्त्वयाहृतमिवाद्य मे ॥ ८३ ॥ (व)

तत् कस्त्वमिति श्रोतुमिच्छामि।

नायकः। एवं क्षुधुपतप्तो (श) न श्रावणयोग्यस्त्वम्। कुरुष्व तावत् मम मांसशोणितेन तृप्तिम्।

शङ्ख। [सहसोपसृत्य] तार्क्ष्य! न खलु न खलु साहस-मनुष्ठेयम्। नायं नागः। परित्यजैनं। मां भक्षय। अहं तवाहारार्थं प्रेषितोऽस्मि वासुकिना। [उरो ददाति (ष)]।

नायकः। [शङ्खचूडं दृष्ट्वा] कष्टं! विफलीभूतो मे मनोरथः शङ्खचूड़ेनागच्छता।

गरुड़ः। [उभौ निरूप्य] द्वयोरपि भवतोर्बध्यचिह्नम्। कः खलु नाग इति नावगच्छामि।

शङ्ख। स्थान एव भ्रान्तिः।

आस्तां स्वस्तिकलक्ष्म वक्षसि तनौ नालोक्यते कञ्चुको
जिह्वे जल्पत एव मे न गणिते नाम त्वया द्वे अपि।

---

(ल) ऊर्जितं तेजस्वलम्।

(व) आवर्जितमिति। मया चञ्च्वा तव हृदयात् शोणितम् आवर्जितम् आहृतं पीतमित्यर्थः पुनः किन्तु त्वया अनेन धैर्य्येण एतदवस्थायामपि अचाञ्चल्य-रूपेणेति भावः। मे मम शोणितमिति शेषः आहृतमिव।

(श) क्षुधुपतप्तः क्षुधानिपीड़ितः।

(ष) उरः वक्षःस्थलं ददाति दर्शयतीत्यर्थः।

तिस्रस्तीव्रविषाग्निधूमपटलव्याजिह्मरत्नत्विषो
नैता दुस्सहशोकसीत्कृतमरुत्पीड़ाः फणाः पश्यसि ॥ ९४ ॥
(स)

गरुड़ः। [उभौ निरूप्य शङ्खचूड़स्य फणां दृष्ट्वा] तत्कः खलु मया व्यापादितः।

शङ्ख। विद्याधरवंशतिलको जीमूतवाहनः। कथमकारुणिकेन त्वया इदमनुष्ठितम्।

गरुड़ः। [स्वगतम्] कथमनुष्ठितम्। अयं विद्याधरकुमारो जीमूतवाहनः ?

मेरौ मन्दरकन्दरासु हिमवत्सानौ महेन्द्राचले
कैलासस्य शिलातलेषु मलयप्राग्भारभागेष्वपि।
दिक्कुञ्जेषु च तेषु तेषु बहुशो यस्य श्रुतं तन्मया
लोकालोकविचारिचारणगणैरुद्गीयमानं यशः ॥ ९५ ॥ (ह)

(स) आस्तामिति। वर्ष्मसि स्वस्तिकलक्ष्म स्वस्तिकं नाम नागचिह्नविशेषः तदेव लक्ष्म लक्षणम् आस्तां तिष्ठतु, तनौ शरीरे ममेति शेषः कञ्चुकः (खोलीस इति यस्य प्रसिद्धिः) न आलोक्यते न दृश्यते त्वयेति शेषः। किञ्च त्वया जल्पतः आलपत एव मे द्वे जिह्वे अपि न गणिते न लक्षिते नाम, तथा तीव्रेण तीक्ष्णेन दारुणेनेत्यर्थः विषाग्नेः धूमपटलेन धूमनिचयेन व्याजिह्मा मलिना रत्नानां त्विषः कान्तयः यासां तथोक्ताः दुःसहेन सोढुमशक्येन शोकेन यत् सीत्कृतं सीत्कारः तदेव मरुत् वायुः कम्पनकारित्वादिति भावः। तेन पीड़ा कम्पनरूपा व्यथा यासां तादृशीः तिस्रः एताः फणाः न पश्यसि ? शार्दूलविक्रीड़ितं वृत्तम्।

(ह) मेराविति। मया यस्य मेरौ सुमेरुशैले मन्दरस्य पर्वतस्य कन्दरासु गुहासु, हिमवतः हिमाचलस्य सानौ प्रस्थे, महेन्द्राचले, कैलासस्य शिलातलेषु,



सर्वथा महत्यंहःपङ्के (च) निमग्नोऽस्मि।

नायकः। भोः फणिपते ! किमेवमुद्विग्नोऽसि।

शङ्ख। किमस्थानमिदमावेगस्य (क)।

स्वशरीरमिदं दत्त्वा तार्क्ष्यात् परिरक्षितं यदीयमिदम्
युक्तं नेतुं भवतः पातालतलादपि तलं माम् ॥ ९६ ॥ (ख)

गरुड़ः। अये ! करुणार्द्रचेतसा अनेन महात्मना अस्मद्ग्रासगोचरपतितस्यास्य फणिनः प्राणान् रक्षितुं स्वदेह आहारार्थमुपनीतः। तन्महदकृत्यमेतन्मया कृतम्। किं बहुना बोधिसत्व एवायं व्यापादितः। तस्य महतः पापस्य अग्निप्रवेशादृते नान्यत् प्रायश्चित्तं पश्यामि। तत् क्व नु खलु वह्निं समासादयामि (ग)।

मलयस्य पर्वतस्य प्राग्भारभागेषु पूर्वविभागेषु तथा तेषु तेषु दिक्कुञ्जेषु दिगन्तकाननेषु बहुशः प्रभूतं पुनः पुनर्वा लोकालोके पर्वते विचरन्तीति तथोक्ता ये चारणगणाः वैतालिकवर्गाः तैः उच्चैर्गान्धारग्रामेण गीयमानं तत् प्रसिद्धं यशः श्रुतम्। शार्दूलविक्रीड़ितं वृत्तम्।

(च) अंहःपङ्के पापपङ्के।

(क) अस्थानम् अयोग्यस्थानम्। आवेगस्य वैक्लव्यस्य।

(ख) स्वशरीरमिति। स्वशरीरम् इदं दत्त्वा तार्क्ष्यात् गरुड़ात् यदीयं यस्य मम इदं शरीरं परिरक्षितं त्वयेति शेषः तं मां भवतः पातालतलात् अपि तलं नेतुं युक्तम्। इत्थम्भूते पाताले कथमहं सुखं दर्शयिष्यामि अतस्तस्मादपि तले मम गमनं युक्तमिति निष्कर्षः।

(ग) बोधिसत्त्वः तदाख्यः करुणाधारः कश्चिन्महात्मा। समासादयामि प्राप्नोमि।

[ दिशः पश्यन् । ] अये ! अमी केचित् गृहीताग्नय इत एवागच्छन्ति । तद् यावदेतान् प्रतिपालयामि ।

शंख । कुमार ! पितरौ ते प्राप्तौ ।

नायकः । [ ससम्भ्रमम् ] शंखचूड़ ! समुपविश्योत्तरीयेण आच्छादितशरीरं कृत्वा धारय माम् । अन्यथा कदाचिदीदृशं महसैव मां दृष्ट्वा अम्बा जीवितं जह्यात् ।

शंख । [ पार्श्वपतितमुत्तरीयं गृहीत्वा तथा करोति ] ।

[ ततः प्रविशति पत्नीवधूसमेतो जीमूतकेतुः ]

जीमू । [ सास्रम् ] हा पुत्र जीमूतवाहन !

आत्मीयः पर इत्ययं खलु कुतः सत्यं कृपायां क्रमः
किं रक्ष्या बहवः किमेक इति ते जाता न चिन्ता कथम् ।
तार्क्ष्यात् त्रातुमहिं स्वजीवितपरित्यागं त्वया कुर्वता
येनात्मा पितरौ वधूरिति हतं निःशेषमेतत् कुलम् ॥८७॥
(घ)

वृद्धा । [ मलयवतीमुद्दिश्य ] जादे ! बिरम सुहुत्तअं ।

(घ) आत्मीय इति । कृपायाम् अयम् आत्मीयः स्वजनः, अयं परः इत्ययं क्रमः नियमः विचार इत्यर्थः कुतः, सत्यं खलु सत्यमेव कृपावितरणे आत्मपरविचारो नास्तीति तथ्यमेवेत्यर्थः । किन्तु बहवः किं रक्ष्याः रक्षणीयाः ? किम् एकः रक्ष्यः इति ते तव कथं न चिन्ता जाता । येन त्वया अहिं पन्नगम् एकमिति शेषः त्रातुं रक्षितुं स्वशरीरपरित्यागं कुर्वता सता आत्मा पितरौ वधूरिति एतत् कुलं निःशेषं हतं नाशितम् । शार्दूलविक्रीड़ितं वृत्तम् ।



अविरलनिवड़न्तवाप्पविन्दूहिं अहिहवीअदि (ङ) अअं अग्गी (२०) ।

[ सर्वे परिक्रामन्ति ]

जीमू । हा पुत्र जीमूतवाहन !

गरुड़ः । [ श्रुत्वा । ] हा ! जीमूतवाहनेति ब्रवीति । तद्व्यक्तमयमस्य पिता । तत् किमेतदीयेनाग्निना आत्मानमुद्दीपयामि । न शक्नोमि अस्य पुत्रघातलज्जया मुखं दर्शयितुम् । अथवा किमग्निहेतोः पर्य्याकुलोऽस्मि । तटस्थ (च) एवास्मि जलनिधेः । तद् यावदिदानीं ।

ज्वालाभङ्गैस्त्रिलोकग्रसनरसलसत्कालजिह्वाग्रकल्पैः
सर्पद्भिः सप्तसप्तेः पदमिव कवलीकर्त्तुमीशैः समुद्रे
स्वैरेवोत्पातवातप्रसरपटुतरैर्धुक्षिते पञ्चवातैः
अस्मिन् कल्पावसानज्वलनभयकरे बाड़वाग्नौ पतामि ॥८८॥
(छ)

[ इत्युत्पातुमिच्छति ]

(२०) जाते ! विरम मुहूर्त्तम् । अविरलनिपतद्बाष्पविन्दुभिरभिभूयतेऽयमग्निः ।

(ङ) अभिभूयते निर्वाणम् प्राप्यते ।

(च) तटस्थः तीरस्थः ।

(छ) ज्वालाभङ्गैरिति । त्रिलोकस्य त्रिभुवनस्य ग्रसने यः रसः अनुरागः तेन लसत् स्फुरत् यत् कालस्य जिह्वाग्रं तत् कल्पैः तत्सदृशैः सर्पद्भिः सञ्चरद्भिः अतएव सप्तसप्तेः सूर्य्यस्य पदं स्थानं सूर्य्यलोकमित्यर्थः कवलीकर्त्तुं ग्रासीकर्त्तुं ईशैः समर्थैः ज्वालाभङ्गैः अर्चिर्निचयैः उपलक्षिते इति शेषः उपलक्षणे तृतीया । स्वैरेव

नायकः। भोः पक्षिराज! अलमनेनाध्यवसायेन। नायं प्रतीकारोऽस्य (ज) पाप्मनः।

गरुड़ः। [जानुभ्यां स्थित्वा कृताञ्जलिः] भो महात्मन्! कस्तर्हिं कथ्यताम्।

नायकः। प्रतिपालय क्षणमेकम्। पितरौ मे प्राप्तौ। यावदेतौ प्रणमामि।

गरुड़ः। एवं क्रियताम्।

जीमू। [दृष्ट्वा सहर्षम्] देवि! दिष्ट्या वर्द्धसे। अयं वत्सो जीमूतवाहनो न केवलं ध्रियते। प्रत्युत कृताञ्जलिना गरुड़ेन शिष्येणेव पर्य्युपास्यमानस्तिष्ठति (झ)।

वृद्धा। महाराअ! कअत्थम्हि। अक्खदसरीरस्स मुहं पेक्खिस्सं (२१)।

मल। अहं अज्जउत्तं पेक्खिअ अदिपिअंत्ति करिअ ण पत्तिआमि (ञ)। (२२)

---

(२१) महाराज! कृतार्थास्मि। अक्षतशरीरस्य मुखं प्रेक्षिष्ये।

(२२) अहमार्य्यपुत्रं प्रेक्ष्य अतिप्रियमिति कृत्वा न प्रत्येमि।

---

उत्पाते प्रलये यः वातस्य प्रसरः प्रस्फुरणं तद्वत् पटुतराः प्रचण्डा इत्यर्थः तैः पक्षप्रवातैः समुद्रे क्षुभिते सन्दीपिते कल्पावसाने प्रलये यः ज्वलनः अग्निः तद्वत् भयकरे भयजनके अस्मिन् वाड़वाग्नौ पतामि। स्रग्धरावृत्तम्।

(ज) प्रतीकारः प्रायश्चित्तम्।

(झ) ध्रियते जीवति। पर्य्युपास्यमानः सेव्यमानः।

(ञ) प्रत्येमि विश्वसिमि।



जीमू। [उपसृत्य] वत्स! एह्येहि, परिष्वजस्व माम्।

नायकः। [उत्थातुमिच्छन् पतितोत्तरीयो मूर्च्छति।]

शङ्ख। कुमार! समाश्वसिहि समाश्वसिहि।

जीमू। हा वत्स! कथं मां दृष्ट्वा परिष्वङ्गं (ट) गतोऽसि।

वृद्धा। हा पुत्तक! कहं वाआमित्तकेण बि तुए ण सम्भाविदम्हि (२३)।

मल। हा अज्जउत्त! कहं गुरुअणो बि दे ण पेक्खिदव्वो (२४)। [सर्वे मोहं गच्छन्ति।]

शङ्ख। हा! शङ्खचूड़हतक! कथं गर्भस्थ एव न विपन्नोऽसि। येनैवं क्षणे क्षणे मरणातिगं दुःखमनुभवसि।

गरुड़ः। सर्वमिदं मम नृशंसस्य असमीक्ष्यकारितया विजृम्भितम् (ठ)। तदेवं तावत् करोमि। [पक्षाभ्यां वीजयन्।] भो महात्मन! समाश्वसिहि समाश्वसिहि।

नायकः। [समाश्वस्य।] शंखचूड़! समाश्वासय गुरून्।

शंख। तात! समाश्वसिहि समाश्वसिहि। अम्ब! समाश्वसिहि समाश्वसिहि। [उभौ समाश्वसितः।]

---

(२३) हा पुत्रक! कथं वाङ्मात्रेणापि त्वया न सम्भावितास्मि।

(२४) हा आर्य्यपुत्र! कथं गुरुजनोऽपि ते न प्रेक्षितव्यः।

---

(ट) परिष्वङ्गम् आलिङ्गनम्।

(ठ) असमीक्ष्यकारितया अविमृष्यकारितायाः। विजृम्भितं विलासः कार्य्यमित्यर्थः।

वृद्धा। पुत्त! कहं प्रेक्खन्ताणं एव्व अम्हाणं कदन्त-हदएण अवहरीअसि। (२५)

जीमू। देवि! मैवममङ्गल्यवादिनी भव। भ्रियत एवायुष्मान्। तद्वधूः समाश्वास्यताम्।

वृद्धा। [ मुखं वस्त्रेणावृत्य रुदती। ] पड़िहदममङ्गलम्। ण रोइस्सम्। मलअवदि! समस्सस। वच्छे! उट्ठेहि उट्ठेहि। वरं एत्तिअवेलं तुमं भत्तुणो मुहं पेक्ख। (२६)

मल। [ समाश्वस्य। ] हा अज्जउत्त! (२७)

वृद्धा। [ मलयवत्या मुखं पिधाय ] वच्छे! मा एव्वं करेहि। पड़िहदं क्खु एदं (२८)।

जीमू। [ सास्रमात्मगतम्। ]

विलुप्तशेषाङ्गतया प्रयातान्
निराश्रयत्वादिव कण्ठदेशम्।
प्राणांस्त्यजन्तं तनयं निरीक्ष्य
कथं न तापात् शतधा प्रयामि ॥९९॥ (ड)

---

(२५) कथं प्रेक्षमाणानामेवास्माकं कृतान्तहतकेनापह्रियसे।

(२६) प्रतिहतममङ्गलम्। न रोदिष्यामि। मलयवति! समाश्वसिहि वरमेतस्यां वेलायां त्वं भर्त्तुर्मुखं प्रेक्षस्व।

(२७) हा आर्य्यपुत्र!

(२८) वत्से! मैवं कुरु। प्रतिहतं खल्वेतत्।

---

(ड) विलुप्तेति। विलुप्तशेषाणि विनष्टशेषाणि अङ्गानि अवयवा यस्य तत् तया हेतुना निराश्रयत्वात् निरवलम्बनत्वादिव कण्ठदेशं प्रयातान् गतान् प्राणान्



मल। हा अज्जउत्त! अदिदुक्करकारिणी क्खु अहं। जा ईदिसं अज्जउत्तं पेक्खन्ती अज्जावि जीविअं ण परिच्चआमि (२९)।

वृद्धा। [ नायकस्याङ्गानि स्पृशन्ती गरुड़मुद्दिश्य ] णिसंस! (ढ) कहं दाणीं तुए एदं आरुहमाणजोव्वणसोहं तं एव्व एदावत्थं पुत्तअस्स मे सरीरं किदम् (३०)।

नायकः। अम्ब! मा मैवं। किमनेन कृतम्। ननु पूर्व्वमप्येतदीदृशमेव (ण) परमार्थतः। पश्य

मेदोऽस्थिमांसमज्जासृक्सङ्घातेऽस्मिंस्त्वचावृते।
शरीरे वास्ति का शोभा सदा बीभत्सदर्शने? ॥१००॥ (त)

---

(२९) हा आर्य्यपुत्र! अतिदुष्करकारिणी खल्वहम्। या ईदृशम् आर्य्यपुत्रं प्रेक्षमाणा अद्यापि जीवितं न परित्यजामि।

(३०) नृशंस! कथमिदानीं त्वया एतदारोहन्नवयौवनशोभं तदेवैतावदवस्थं पुत्रकस्य मे शरीरं कृतम्।

---

त्यजन्तं तनयं पुत्रं निरीक्ष्य तापात् व्यथातिरेकात् कथं शतधा न प्रयामि न विदीर्य्ये इत्यर्थः। उपजातिवृत्तम्।

(ढ) नृशंस! निर्दय!

(ण) एतत् शरीरमिति शेषः परमार्थतः तत्त्वतः ईदृशम् एतदवस्थमेव।

(त) मेद इति। मेदसां वसानाम् अस्थ्नां कङ्कालानां मांसानां मज्जानाम् असृजां रुधिराणाञ्च सङ्घाते समष्टिरूपे त्वचा चर्म्मणा आवृते आच्छादिते सदा बीभत्सं घृणितं दर्शनं यस्य तादृशे अस्मिन् शरीरे का वा शोभा अस्ति? नैव कापि शोभेत्यर्थः। तत् कथमेनमधिक्षिपति जननीति भावः।

गरुड़:। भो महात्मन्! नरकानलज्वालावलीढमिवात्मानं मन्यमानो दुःखं तिष्ठामि। तदुपदिश्यतां येन मुच्येयमस्मादेनसः। (थ)

नायकः। अनुजानातु मां तातः। यावदस्य पापस्य प्रतिपक्षमुपदिशामि। (द)

जीमू। वत्स! एवं क्रियताम्।

नायकः। वैनतेय! श्रूयताम्।

गरुड़:। [ कृताञ्जलिः ] आज्ञापय।

नायकः।

नित्यं प्राणाभिघातात् प्रति विरम कुरु प्राक्कृतस्यानुतापं
यत्नात् पुण्यप्रवाहं समुपचिनु दिशन् सर्वसत्त्वेष्वभीतिम्।
मग्नं येनात्र नैनः फलति परिणतं प्राणिहिंसासमुत्थं
येनैतद्वारिपूरे लवणकणमिव क्षिप्तमन्तर्ह्रदस्य ॥१०१॥ (ध)

---

(थ) नरकेति। नरकानलस्य ज्वालाभिः शिखाभिः अवलीढं दग्धमिव। एनसः पापात्।

(द) प्रतिपक्षं शत्रुं प्रायश्चित्तमिति यावत्।

(ध) नित्यमिति। नित्यं सततं प्राणाभिघातात् परप्राणद्रोहात् प्रति विरम निवर्त्तस्व, प्राक् पूर्वस्मिन् काले कृतस्य प्राणिहिंसनरूपस्य पापस्य अनुतापं कुरु, कथमेतन्मया कृतमिति सन्तापम् अनुभव, सर्वेषु सत्त्वेषु जीवेषु अभीतिम् अभयं दिशन् ददत् यत्नात् पुण्यप्रवाहं पुण्यसञ्चयं समुपचिनु अनुतिष्ठ, येन येन उक्तरूपेण कर्मणा इति भावः। अत्र जगति प्राणिहिंसासमुत्थं जीवहिंसासञ्जातं परिणतं फलोन्मुखमित्यर्थः एतत् एनः पापं ह्रदस्य अन्तः वारिपूरे जलप्रवाहे क्षिप्तं लवणकणमिव मग्नं विलीनं विनष्टमिति यावत् न फलति न फलं निरयादिकम् उत्पादयतीत्यर्थः! स्रग्धरावृत्तम्। उपमालङ्कारः।



गरुड़:। यदाज्ञापयसि।

अज्ञाननिद्राशयितो भवता प्रतिबोधितः।
सर्वप्राणिवधादेष विरतोऽद्य प्रभृत्यहम् ॥१०२॥ (न)

सम्प्रति हि

क्वचिद् द्वीपाकारैः पुलिनविपुलैर्भोगनिवहैः
कृतावर्त्तभ्रान्तिर्वलयितशरीरः क्वचिदपि।
व्रजन् कूलात् कूलं क्वचिदपि च सेतुप्रतिसमः
समाजो नागानां विचरतु महोदन्वति सुखम् ॥१०३॥ (प)

अपि च,

स्रस्तानापादलम्बान् घनतिमिरनिभान् केशपाशान् वहन्त्यः
सिन्दूरेणेव दिग्धैः प्रथमरविकरस्पर्शताम्रैः कपोलैः।

---

(न) अज्ञानेति। अज्ञानमेव निद्रा तया शयितः सुप्तः अचेतन इति यावत् एषः अहं भवता। प्रतिबोधितः जागरितः सन् अद्यप्रभृति सर्वेषां प्राणिनां वधात् विरतः निवर्त्ते इत्यर्थः।

(प) क्वचिदिति। नागानां समाजः गणः क्वचित् द्वीपाकारैः सर्वतो जलवेष्टितो भूभागः द्वीपमुच्यते तदाकारैः, पुलिनं सैकतं तोयोत्थितं तत् पुलिनं सैकतं सिकतामयमित्यमरः, तद्वत् विपुलाः वृहन्तः तैः भोगनिवहैः शरीरसमूहैः भोगःसुखे-स्त्र्यादिभृतावहेश्च फणकाययोरित्यमरः। उपलक्षितः क्वचित् वलयितं मण्डलीकृतं शरीरं येन तथोक्तः अतएव कृता जनिता आवर्त्तस्य जलभ्रमस्य स्यादावर्त्तोऽम्भसां भ्रम इत्यमरः, भ्रान्तिः भ्रमः येन तथाभूतः क्वचित् अपि कूलात् कूलं व्रजन् गच्छन् अतएव सेतुप्रतिमः सेतुनिभः सन् महोदन्वति महासमुद्रे सुखं निर्भयमिति यावत् यथा यथा विचरतु सञ्चरतु। शिखरिणीवृत्तं रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात्।

आयासेनालसाङ्ग्योऽप्यवगणितरुजः कानने चन्दनानाम्
अस्मिन् गायन्तु रागादुरगयुवतयः कीर्त्तिमेतां तवैव ॥१०४॥

(फ)

नायकः। साधु महासत्त्व! साधु! अनुमोदामहे। सर्वथा दृढ़समाधानो (ब) भव। [ शंखचूड़ं निर्द्दिश्य ] शंखचूड़! त्वयापि स्वगृहमिदानीं गम्यताम्।

शंख। [ निश्वस्य अधोमुखस्तिष्ठति। ]

नायकः। [ निश्वस्य मातरं पश्यन् ]

उत्प्रेक्षमाणा त्वां तार्क्ष्यचञ्चुकोटिनिपातितम्।
त्वद्दुःखदुःखिता नूनमास्ते सा जननी तव ॥१०५॥ (भ)

---

(फ) स्रस्तानिति। उरगाणां नागानां युवतयः पत्न्यः स्रस्तान् स्खलितान् अतएव आपादलम्बान् चरणपर्य्यन्तपतितानित्यर्थः घनतिमिरनिभान् सान्द्रान्धकारप्रतिमान् केशपाशान्, वेणीकृतकेशानित्यर्थः वहन्त्यः दधाना इत्यर्थः प्रथमेन नवोदितेन रविकरेण सूर्य्यकिरणेन यः स्पर्शः तेन ताम्राः रक्ताः तैः अतएव सिन्दूरेणेव दिग्धैः लिप्तैः कपोलैः उपलक्षिता इत्यर्थः आयासेन श्रमेण विहारजनितेनेति भावः अलसानि श्रान्तानि अङ्गानि यासां तथोक्ताः अपि अवगणिता अचिन्तिताः रुजः पीड़ाः श्रमजनिता इति भावः याभिः ·तथाभूताः सत्यः अस्मिन् चन्दनानां कानने रागात् अनुरागात् तवैव एवशब्दस्य अन्यव्यवच्छेदकत्वात् न ममेति भावः एतां कीर्त्तिं नागेषु अभयदानजनितामिति शेषः गायन्तु कीर्त्तयन्तु। स्रग्धरावृत्तम्।

(ब) अनुमोदामहे अनुमन्यामहे। दृढ़ं समाधानं निश्चयो यस्य तादृशः सत्यप्रतिज्ञ इत्यर्थः।

(भ) उत्प्रेक्षमाणेति। सा तव जननी त्वां तार्क्ष्येण गरुड़ेन चञ्चुकोट्यां चञ्च्वग्रे निपातितम् उत्प्रेक्षमाणा सम्भावयन्ती अतएव ननं निश्चितं तव दुःखेन



वृद्धा। [ सास्रम्। ] धण्णा क्खु सा जणणी जा गरुड़मुहपड़िदस्स अक्खदसरीरस्स एव्व पुत्तअस्स मुहं प्रेक्खिस्सदि (३१)।

शंख। अम्ब! सत्यमेवैतत्। यदि कुमारः स्वस्थो भविष्यति।

नायकः। [ वेदनां नाटयन्। ] अहह! परार्थसम्पादनरसाक्षेपादेतावती वेला मया न लक्षिताः। सम्प्रति तु मां बाधितुमारब्धा मर्म्मच्छेदिन्यो वेदनाः। [ मरणावस्थां नाटयति ] (म)

जीमू। [ ससम्भ्रमम्। ] हा वत्स! किमिवं करोषि?

वृद्धा। हा! किं णु क्खु एव्वं वददि। [ सोरस्ताड़म्। ] परित्ताअह परित्ताअह। एसो क्खु मे पुत्तओ विवज्जइ। (य) (३२)।

---

(३१) धन्या खलु सा जननी या गरुड़मुखपतितस्याक्षतशरीरस्यैव पुत्रकस्य मुखं प्रेक्षिष्यते।

(३२) हा! किं नु खल्वेवं वदति। परित्रायध्वं परित्रायध्वम्। एष खलु मे पुत्रको विपद्यते।

---

शोकेन दुःखिता आर्त्ता आस्ते तिष्ठति, अथवा नूनं मन्ये इत्युत्प्रेक्षा। अतः सत्वरं त्वया माता आश्वासनीयेति भावः।

(म) नाटयन् अभिनयन्। परार्थेति। परार्थस्य परकार्य्यस्य नागप्राणरक्षणरूपस्य इति भावः सम्पादने यो रसः अनुरागः तस्य आक्षेपात् अतिरेकात्। लक्षिताः गणिताः वेदना इत्यनेनान्वयः। वेलामिति व्याप्यर्थे द्वितीया। नाटयति अभिनयति।

(य) सोरस्ताड़ं वक्षःस्थलं ताड़यित्वा। विपद्यते म्रियते।

मल। हा अज्जउत्त! परिच्चइदुकामो विअ लक्खी-असि। (३३)

नायकः। [ अञ्जलिं कर्त्तुमिच्छन्। ] शंखचूड़! समानय (र) मे हस्तौ।

शंख। [ तथा कुर्वन्। ] कष्टमनाथीकृतं (ल) जगत्।

नायकः। [ अर्द्धोन्मीलितचक्षुः पितरं पश्यन्। ] तात! अम्ब! अयं मे पश्चिमः प्रणामः।

गात्राण्यमूनि न वहन्ति सचेतनत्वं
श्रोत्रं स्फुटाक्षरपदां न गिरं शृणोति।
कष्टं निमीलित मिदं सहसैव चक्षुः
हा तात! यान्ति विवशस्य ममासवोऽमी ॥१०६॥ (व)

अथवा। संरक्षता पन्नगम्। [ इत्यादि पठित्वा पतति। ]

वृद्धा। हा पुत्त! हा वच्छ! हा गुरुअणवच्छल! कहिंसि। देहि मे पड़िवअणं (३४)।

---

(३३) हा आर्य्यपुत्र! परित्यक्तुकाम इव लक्ष्यसे।

(३४) हा पुत्र! हा वत्स! हा गुरुजनवत्सल! क्वासि। देहि मे प्रतिवचनम्।

---

(र) समानय संयोजय।

(ल) तथा कुर्वन् करौ संयोजयन्। अनाथीकृतं नाथशून्यं कृतं मयेति शेषः। पश्चिमः शेषः।

(व) गात्राणीति। अमूनि गात्राणि अङ्गानि सचेतनत्वं चैतन्यमित्यर्थः न वहन्ति अवशानि भवन्तीत्यर्थः श्रोत्रं श्रवणेन्द्रियं स्फुटानि सुव्यक्तानि अपि अक्षर-



जीमू। हा वत्स! जीमूतवाहन! हा प्रणयिजनवल्लभ! हा सर्वगुणनिधे! क्वासि देहि मे प्रतिवचनम्। [ हस्तमुत्क्षिप्य। ] कष्टं भोः कष्टम्।

निराधारं धैर्य्यं कमिव शरणं यातु विनयः
क्षमः क्षान्तिं वोढुं क इह विरता दानपरता।
हतं सत्यं सत्यं व्रजतु च कृपा क्वाद्य कृपणा
जगज्जातं शून्यं त्वयि तनय! लोकान्तरगते ॥१०७॥ (श)

मल। हा अज्जउत्त! कहं परिच्चइअ गदोसि अदि-णिग्घिणे मलअवदि! किं तुए पेक्खिदव्वं? जा एत्तिअं वेलं जीविआसि (३५)।

शङ्ख। हा कुमार! क्वेमं प्राणेभ्योऽपि वल्लभं जनं परित्यज्य गम्यते। तदवश्यमन्वेति त्वां शंखचूड़ः।

---

(३५) हा आर्य्यपुत्र! कथं परित्यज्य गतोऽसि। अतिनिर्घृणे मलयवति! किं त्वया प्रेक्षितव्यम्? या एतावद्वेलं जीवितासि।

---

पदानि यस्यां तादृशीमपीति शेषः गिरं वाचं न शृणोति। कष्टम् इदं चक्षुः सहसैव निमीलितम्। हा तात! विवशस्य मम अमी असवः प्राणा यान्ति निर्गच्छन्ति। वसन्ततिलकं वृत्तम्।

(श) निराधारमिति। हे तनय! त्वयि लोकान्तरगते सति धैर्य्यं निराधारं निराश्रयं न कोऽपीदानीं धैर्य्यमाश्रयतीति भावः विनयः कमिव शरणं रक्षितारं शरणं गृहरक्षित्रोरित्यमरः यातु गच्छतु न कमपीत्यर्थः इह जगति क्षान्तिं क्षमां वोढुम् आश्रयितुं कः क्षमः शक्तः? न कोऽपीत्यर्थः दानपरता वदान्यता विरता रहिता, सत्यं सत्यं निश्चितं हतं विनष्टम्, अद्य कृपणा दीना कृपा दया क्व कुत्र व्रजतु गच्छतु? किं बहुना अद्य जगत् शून्यं जातम्। सर्वगुणशालिनस्तव विरहादिति भावः। शिखरिणीवृत्तम्।

गरुड़: । कष्टमुपरतोऽयं (ष) महात्मा । तत् किमिदानीं करोमि ।

वृद्धा । [ सास्रमूर्द्ध्वमवलोक्य । ] भअवन्तो लोअपाला ! कहम्पि अमिदेण सेञ्चिअ पुत्तअं मे जीआवेहि (३६) ।

गरुड़: । [ सहर्षमात्मगतम् । ] अये ! अमृतसङ्कीर्त्तनात् साधु स्मृतम् । मन्ये प्रनष्टमयश: । तद् यावत् त्रिदशपतिमभ्यर्थ्य तद्विसृष्टेनामृतवर्षेण न केवलं जीमूतवाहनमेतानपि पूर्वभक्षितानखिलशेषानुरगपतीन् प्रत्युज्जीवयामि । यदि न ददात्यसौ (स) तदाहम् ।

पक्षै: पीत्वाम्बुनाथं पटुतरजवनै: प्रेर्य्यमाण: समीरै:
नेत्राग्निप्लोषमूर्च्छाविधुरविनिपतत्सानलद्वादशार्क: ।
चञ्च्वा सञ्चूर्ण्य शक्राशनिधनदगदाप्रेतलोकेशदण्डान्
आजौ निर्जित्य देवान् क्षणमसृतमयं वर्षमभ्युत्सृजामि ॥१०८॥

(ह)

(३६) भगवन्तो लोकपाला: ! कथमप्यमृतेन सिक्त्वा पुत्रकं मे जीवय ।

(ष) उपरत: मृत: ।

(स) त्रिदशपतिं देवराजम् । अभ्यर्थ्य याचित्वा, तद्विसृष्टेन तद्दत्तेन । असौ देवराज: ।

(ह) पक्षैरिति । पटुतरा: समर्थतरा: अतएव जवना वेगवन्त: तै: समीरै: पवनसदृशैरित्यर्थ: पक्षै: प्रेर्य्यमाण: उह्यमान इत्यर्थ: अम्बुनाथं समुद्रं पीत्वा नेत्राग्निना य: प्लोष: दाह: तेन या मूर्च्छा मोह: तया विधुरा विक्लवा: सन्त:



तदयं गतोऽस्मि । [ इति साटोपं (च) प्रतिक्रम्य निष्क्रान्त: ]

जीमू । वत्स शंखचूड़ । किमद्यापि स्थीयते । समाहृत्य दारूणि पुत्रस्य मे विरचय चिताम् । येन वयमप्यनेन सहैव गच्छाम: ।

वृद्धा । पुत्त शंखचूड़ ! लहुं सज्जेहि । दु:क्खं अम्हेहिं विणा भाउणो दे चिट्ठदि (३७) ।

शंख । [ सास्रम् । ] यदाज्ञापयन्ति गुरव: । नन्वग्रग एवाहं युष्माकम् । [ उत्थाय चितारचनां कृत्वा । ] तात ! अम्ब ! सज्जीकृतेयं चिता ।

जीमू । देवि ! किमपरं रुद्यते ? तदुत्तिष्ठ चितायामारोहाम: । [ सर्व्वे उत्तिष्ठन्ति । ]

मल । [ बद्धाञ्जलिरूर्द्ध्वं पश्यन्ती । ] भअवदि गोरि ! तुए आणत्तं । जहा विज्जाहरचक्कवट्टी भत्ता ते भविस्सदित्ति । ता कहं मम मन्दभग्गाए किदे तुमं अलिअवअणा संवुत्ता । (३८)

(३७) पुत्र शङ्खचूड ! लघु सज्जय । दु:खमस्माभिर्विना भ्राता ते तिष्ठति ।

(३८) भगवति गौरि ! त्वया आज्ञप्तम् । विद्याधरचक्रवर्त्ती भर्त्ता ते भविष्यतीति । तत् कथं मम मन्दभाग्याया: कृते त्वमलीकवचना संवृत्ता ।

निपतन्त: सानला: साग्निका: द्वादश अर्का: सूर्य्या: यस्य तथाभूत: चञ्च्वा शक्रस्य इन्द्रस्य अशनि:, धनदस्य कुवेरस्य गदा, प्रेतलोकानामीशस्य यमस्य दण्ड: तान् सञ्चूर्ण्य आजौ युद्धे देवान् निर्जित्य पराभूय क्षणम् अमृतमयं वर्षम् अभ्युत्सृजामि करोमीत्यर्थ: । स्रग्धरावृत्तम् ।

(च) साटोपं ससम्भ्रमं सावेगं वा ।

[ ततः प्रविशतिससम्भ्रमा गौरी ]

गौरी। महाराज ! जीमूतकेतो ! न खलु साहसमनुष्ठातव्यम्।

जीमू। अये ! कथममोघदर्शना गौरी।

गौरी। [ मलयवतीमुद्दिश्य। ] वत्से ! कथमहमलीकवादिनी भवेयम्। [ नायकमुपसृत्य कमण्डलुजलेनाभ्युक्ष्य ]

निजेन जीवितेनापि जगतामुपकारिणः।
परितुष्टास्मि ते वत्स ! जीव जीमूतवाहन ! ॥१०९॥ (क)

नायकः। [ उत्तिष्ठति। ]

जीमू। सहर्षम्। देवि ! दिष्ट्या वर्द्धसे। प्रत्युज्जीवितो वत्सः।

वृद्धा। भअवदीए पसादेण। (३९)

नायकः। [ गौरीं दृष्ट्वा बद्धाञ्जलिः। ] अये ! कथममोघदर्शना भगवती ?।

अभिलषिताखिलवरदे ! प्रणिपतितजनार्त्तिहारिणि ! शरण्ये !
चरणौ नमाम्यहं ते विद्याधरवन्दिते ! गौरि ! ॥११०॥ (ख)

---

(३९) भगवत्याः प्रसादेन।

---

(क) निजेनेति। हे वत्स ! जीमूतवाहन ! निजेन जीवितेन जगताम् उपकारिणः ते तव परितुष्टास्मि प्रीतास्मि।

(ख) अभीति। अभिलषितं वाञ्छितम् अखिलं समस्तं वरं ददातीति



[ इति गौर्य्याः पादयोः पतति। सर्वे ऊर्द्ध्वं पश्यन्ति। ]

जीमू। अये ! कथमनभ्रा वृष्टिः। भगवति ! किमेतत्।

गौरी। राजन् जीमूतकेतो ! जीमूतवाहनं प्रत्युज्जीवयितुं मे तांश्चास्थिशेषानुरगपतीन् समुपजातपश्चात्तापेन पक्षिपतिना देवलोकादियममृतवृष्टिः पातिता। ] अङ्गुल्या निर्दिश्य। ] किं न पश्यति भवान्।

सम्प्राप्ताः शंखचूडं स्फुटमणिकिरणैर्भासुरैरुत्तमाङ्गैः
जिह्वाकोटिद्वयेन क्षितिममृतरसास्वादलोभाल्लिहन्तः।
सम्प्रत्याबद्धवेगा मलयगिरिसरिद्वारिपूरा इवैते
वक्रैः प्रस्थानमार्गैर्विषधरपतयस्तोयराशिं विशन्ति ॥ १११ ॥ (ग)

[ नायममुद्दिश्य। ] वत्स जीमूतवाहन ! न त्वं जीवितदानमात्रस्यैव योग्यः। तदयमपरस्ते प्रसादः।

---

तत् सम्बोधने तथा प्रणिपतितानां जनानाम् आर्त्तिहारिणि ! क्लेशनाशिनि ! शरण्ये ! शरणागतरक्षिणि ! विद्याधरैः वन्दिते ! हे गौरि ! अहं ते तव चरणौ नमामि। आर्य्यावृत्तम्।

(ग) सम्प्राप्ता इति। शङ्खचूडं सम्प्राप्ताः सङ्गताः शङ्खचूडेन मिलिता इत्यर्थः स्फुटा उज्ज्वलाः मणीनां फणस्थितानामिति शेषः किरणाः प्रभाः येषां तादृशैः उत्तमाङ्गैः शिरोभिः फणैरिति यावत् उपलक्षिताः अमृतरसस्य अन्तरीक्षात् वृष्टस्येति भावः आस्वादलोभात् जिह्वाकोटिद्वयेन जिह्वाद्वितयाग्रभागेनेत्यर्थः क्षितिं पृथिवीं लिहन्तः आस्वादयन्तः मलयगिरेः सरितां नदीनां वारिपूरा इव जलप्रवाहा इव सम्प्रति आबद्धवेगाः वेगवन्तः एते विषधरपतयः भुजगेन्द्राः वक्रैः कुटिलैः प्रस्थानमार्गैः गतिभिरित्यर्थः तोयराशिं समुद्रं विशन्ति। स्रग्धरावृत्तम्।

हंसांसाहतहेमपङ्कजरजः सम्पर्कपङ्कोचितै-
रुत्पन्नैर्मम मानसादुपनतैस्तोयैर्महापावनैः ।
स्वेच्छानिर्मितरत्नकुम्भनिहितैरेषाभिषिच्य स्वयं
त्वां विद्याधरचक्रवर्त्तिनमहं प्रीत्या करोमि क्षणात् ॥ ११२ ॥
(घ)

अपिच

अग्रेसरीभवतु काञ्चनचक्ररत्न-
मेष द्विपश्च धवलैर्दशनैश्चतुर्भिः ।
श्यामो हरिर्मलयवत्यपि चेत्यमूनि
रत्नानि मे समवलोकय चक्रवर्त्तिन् ! ॥११३॥ (ङ)

अपिच । आलोक्यन्तामसौ शारदशशाङ्कनिर्मलबाल-
व्यजनहस्ता मणिमरीचिर्चितेन्द्रचापभक्तयो भक्तिनमित-

---

(घ) हंसेति । एषा सुप्रसन्नेति भावः अहं स्वयं प्रीत्या परितोषेण हेतुना क्षणात् क्षणमात्रेण मम मानसात् उत्पन्नैः हंसानाम् अंसैः स्कन्धभागैः आहतानां कम्पितानां हेमपङ्कजानां काञ्चनकमलानां रजोभिः परागैः सम्पर्क एव पङ्कस्तेन उचितैः सिक्तैः ससृक्तैरिति यावत् महापावनैः अतिपवित्रैः स्वेच्छया निर्मितेषु रत्नकुम्भेषु निहितैः स्थापितैः उपनतैः उपस्थितैः तोयैः जलैः त्वाम् अभिषिच्य विद्याधराणां चक्रवर्त्तिनम् अधीश्वरं करोमि । शार्दूलविक्रीड़ितं वृत्तम् ।

(ङ) अग्रेसरीभवत्विति । हे चक्रवर्त्तिन् ! काञ्चनानां चक्रं राशिरेव रत्नम् अग्रेसरीभवतु तवाग्रे गच्छतु । धवलैः शुभ्रैः चतुर्भिः दशनैः उपलक्षितः चतुर्दन्त इत्यर्थः एष द्विपः ऐरावत इत्यर्थः श्यामः कृष्णवर्णः हरिर्नारायणः मलयवती च इति अमूनि मे मम रत्नानि समवलोकय पश्य । वसन्ततिलकं वृत्तम् ।



पूर्वार्द्धकायाः (च) प्रणमन्ति नमन्ति च मतङ्गहतकाद्यो
विद्याधरपतयः । तदुच्यतां किं ते भूयः प्रियमुपकरोमि ।

नायकः । अतः परमपि प्रियमस्ति ।

त्रातोऽयं शङ्खचूड़ः पतगपतिभयाद्वैनतेयो विनीतः
तेन प्राग्भक्षिता ये विषधरपतयो जीवितास्तेऽपि सर्वे ।
मत्प्राणाप्त्या च मुक्ता न गुरुभिरसवश्चक्रवर्त्तित्वमाप्तं
साक्षात् त्वं देवि ! दृष्टा प्रियमपरमतः किं पुन प्रार्थ्यसे यत्
॥११४॥ (छ)

तथापीदमस्तु भरतवाक्यम् ।

वृष्टिं हृष्टशिखण्डिताण्डवकृते मुञ्चन्तु काले घनाः
कुर्वन्तु प्रतिरूढ़सन्ततहरित्शस्योत्तरीयां क्षितिम् ।

---

(च) आलोक्यन्तां दृश्यन्ताम् । शारदेति शारदः शरत्कालीनः यः शशाङ्कः तद्वत् निर्मलं वालव्यजनं हस्ते येषां तथाभूताः, मणीनां रत्नानां स्वस्वगात्रपरिहितानामिति भावः मरीचिभिः किरणैः रचिताः निर्मिता इन्द्रचापस्य शक्रधनुष इव भक्तयः रचनाः यैः तथाभूताः तथा भक्त्या नमितः पूर्वार्द्धकायः यैः तथाविधाः ।

(छ) त्रात इति । अयं शङ्खचूड़ः पतगंपतेः पक्षिराजस्य भयात् त्रातः रक्षितः वैनतेयः गरुड़ः विनीतः विनयं गतः । तेन वैनतेयेन प्राक् पूर्वं ये विषधरपतयः नागेन्द्राः भक्षिताः ते सर्वेऽपि जीविताः, मम प्राणप्राप्त्या जीवनलाभेन गुरुभिः पित्रादिभिः असवः प्राणा न मुक्ताः न त्यक्ताः, चक्रवर्त्तित्वं विद्याधरसाम्राज्यम् आप्तं प्राप्तं मयेति शेषः किं बहुना हे देवि ! त्वं साक्षात् दृष्टा साक्षात् कृता, अतःपरं प्रियं किं पुनः, यत् प्रार्थ्यसे त्वमिति शेषः नातःपरमपि प्रियमस्तीति न किमपि प्रार्थये इत्यर्थः । स्रग्धरावृत्तम् ।

चिन्वानाः सुकृतानि वीतविपदो निर्मत्सरैर्मानसैः
मोदन्तां सततञ्च बान्धवसुहृद्गोष्ठीप्रमोदाः प्रजाः ॥११५॥ (ज)

इति निष्क्रान्ताः सर्वे ।

इति पञ्चमोऽङ्कः ।

समाप्तञ्चेदं नागानन्दं नाम नाटकम् ।

---

(ज) वृष्टिमिति । घना मेघाः हृष्टानां शिखण्डिनां मयूराणां ताण्डवकृते नर्त्तनार्थं काले वृष्टिं मुञ्चन्तु वर्षन्तु इत्यर्थः । प्रतिरूढं सञ्जातं सन्ततम् अविच्छिन्नं यत् हरित शस्यं धान्यादि तदेव उत्तरीयं गात्रावरणवसनरूपं यस्या-स्तथाभूतां चितिं पृथिवीं कुर्वन्तु च । तथा प्रजाः वीता विगता विपद् यासां तथाभूताः निर्मत्सरैः अन्यशुभद्वेषवर्जितैरित्यर्थः मत्सरोऽन्यशुभद्वेषे इत्यमरः । मानसैः सुकृतानि सत्कार्य्याणि चिन्वानाः कुर्वत्यः तथा बान्धवानां भ्रातृपितृव्या-दीनां सुहृदां मित्राणाञ्च गोष्ठीषु समाजेषु प्रमोदन्ते इति तथाविधाः सत्यः सततं मोदन्तां सुखीभवन्तु च । शार्दूलविक्रीड़ितं वृत्तम् ।

इति पञ्चमोऽङ्कः ।

---

इति पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता नागानन्दनाटकव्याख्या समाप्ता ।

